विडिविलिकुरिमृदिपिशिभ्यः कित् ॥ १०१ ॥

एभ्यः किदङ्गः प्रत्ययो भवति ॥ विड आक्रोशे । विडङ्गो वृक्षजातिर्मृदावयवश्च ॥ विलत् वरणे । बिलत् भेदने वा । विलङ्ग औषधम् ॥ कुरत् शब्दे । कुरङ्गो हरिणः । कुरङ्गी भोजकन्या ॥ मृदश् क्षोदे । मृदङ्गो मुरजः ॥ पिशत् अवयवे । पिशङ्गो वर्णः ॥ १०१ ॥

स्फुलिकलिपल्याद्भ्य इङ्गक् ॥ १०२ ॥

स्फुल्यादिभ्य आदन्तेभ्यश्च इङ्गक् प्रत्ययो भवति ॥ स्फुलत् संचये च । स्फुलिङ्गः स्फुलिङ्गा चाग्निकणः ॥ कलि शब्दसंख्यानयोः । कलिङ्गो राजा । कलिङ्गा जनपदः ॥ पल गतौ । पलिङ्ग ऋषिः शिला च ॥ पातेः । पिङ्गः ॥ भातेः । भिङ्गः । द्वावपि वर्णविशेषौ ॥ ददातेः । दिङ्गोऽध्यक्षः ॥ दधातेः । धिङ्गः श्रेष्ठी ॥ लातेः । लिङ्गं स्त्रीत्वादि हेतुश्च । आलिङ्गो वाद्यविशेषः ॥ श्यतेः शिङ्गो वनस्पतिः किशोरश्च ॥ १०२ ॥

भलेरिदुतौ चातः ॥ १०३ ॥

भलिण् आभण्डने । इत्यस्मादिङ्गक् प्रत्ययो भवत्यकारस्य च इकार-उकारौ भवतः ॥ भिलिङ्गः कर्मारोपकरणम् । भुलिङ्ग ऋषिः पक्षी [च] । भुलिङ्गाः साल्वावयवाः ॥ १०३ ॥

अदेर्णित् ॥ १०४ ॥

अदंक् भक्षणे । इत्यस्मादिङ्गक् प्रत्ययो भवति स च णित् [भवति] ॥ आदिङ्गो वाद्यजातिः ॥ १०४ ॥

उच्चिलिङ्गादयः ॥ १०५ ॥

उच्चिलिङ्गादयः शब्दा इङ्गक्प्रत्ययान्ता निपात्यन्ते ॥ उत्पूर्वात् चलेरस्येत्वं च । उच्चिलिङ्गो दाडिमी ॥ आदिग्रहणादन्येपि ॥ १०५ ॥

माङस्तुलेरुङ्गक् च ॥ १०६ ॥

माङ्पूर्वात् तुलण् उन्माने । इत्यस्मादुङ्गक् इङ्गक् च प्रत्ययौ भवतः ॥ मातुलुङ्गो बीजपूरः । मातुलिङ्गः स एव ॥ १०६ ॥

कमितमिशमिभ्यो डित् ॥ १०७ ॥

एभ्यो डिदुङ्गः प्रत्ययो भवति ॥ कमूङ् कान्तौ । कुङ्गा जनपदः ॥ तमूच्

काङ्क्षायाम् । तुङ्गो महावर्ष्मा ।। शमूच् उपशमे । शुङ्गो मुनिः । शुङ्गाः कन्दल्यः । शुङ्गा विनता ।। १०७ ।।

सर्तेः सुर् च ।। १०८ ।।

सृं गतौ । इत्यस्मादुङ्गः प्रत्ययो [भवति] सुर् चास्यादेशो भवति ।। सु-[र]ङ्गा गूढमार्गः ।। १०८ ।।

स्थार्तिजनिभ्यो घः ।। १०९ ।।

एभ्यो घः प्रत्ययो भवति ।। ष्ठां गतिनिवृत्तौ । स्थाघो गाधः ।। ऋं प्रापणे च । अर्घो मूल्यं मानप्रमाणं पादोदकादि च ।। जनैचि प्रादुर्भावे । जङ्घा शरीरावयवः ।। १०९ ।।

मघाघङ्काघदीर्घादयः ।। ११० ।।

एते घप्रत्ययान्ता निपात्यन्ते ।। मङ्केर्नघलोपश्च । मघा नक्षत्रम् ।। हन्तेर्हस्व घश्च । घङ्को घस्मरः । घङ्का काङ्क्षा ।। अमेर्लुक् च । अघं पापम् ।। दृणातेर्दीर् च । दीर्घ आयत उच्चश्च ।। आदिशब्दादन्येपि ।। ११० ।।

सर्तेरघः ।। १११ ।।

सृं गतौ । इत्यस्मादघः प्रत्ययो भवति ।। सरघा मधुमक्षिका ।। १११ ।।

कुपूसमिण्भ्यश्चट् दीर्घश्च ।। ११२ ।।

कुपूभ्यां सम्पूर्वाच्च इणश्चट् प्रत्ययो [भवति] दीर्घश्च भवति । टो ङ्यर्थः ।। कुंङ् शब्दे । कूचो हस्ती । कूची प्रमदा चित्रभाण्डमुदश्चिद्दिकारश्च ।। पूग्श् पवने । पूचः पूची मुनिः ।। इण्क् गतौ । समीच ऋत्विक् । समीचं मिथुनयोगः । समीची पृथिवी । उदीची च । दीर्घवचनाद्गुणो न भवति ।। ११२ ।।

कूर्चचूर्चादयः ।। ११३ ।।

कूर्च इत्यादयः शब्दाश्चट्प्रत्ययान्ता निपात्यन्ते ।। कवतेः किरतेः करोतेर्वा । ऊरादेशश्चान्तस्य । कूर्चं इमश्रासनं तन्तुवायोपकरणं वतिपवित्रकं च । कूर्चमिव कूर्चकः कूर्चिकेति च भवति ।। चरतेश्चोरयतेर्वा चूरादेशश्च । चूर्चो बलवान् ।। आदिशब्दादन्येपि ।। ११३ ।।

कल्यविमदिमणिकुकणिकुटिकृभ्योचः ।। ११४ ।।

एभ्योचः प्रत्ययो भवति ।। कलि शब्दसंख्यानयोः । कलचो गणकः ।।

अव रक्षणादौ । अवच उष्ट्रस्तरः ॥ मदैव् हर्षे । मदचो मत्तः ॥ मण शब्दे । मणचः शकुनिः ॥ कुंङ् शब्दे । कवचं वर्म ॥ कण शब्दे । कणचः कणयः ॥ कुटत् कौटिल्ये । कुटचो वृक्षजातिः ॥ कृत् विक्षेपे । करचो धान्यावपनम्॥११४॥

क्रकचादयः ॥ ११५ ॥

क्रकच इत्यादयः शब्दा अचप्रत्ययान्ता निपात्यन्ते ॥ क्रमेः कश्च । क्रकचः करपत्त्रः ॥ आदिशब्दादन्येपि ॥ ११५ ॥

पिशेराचक् ॥ ११६ ॥

पिशत् अवयवे । इत्यस्मादाचक् प्रत्ययो भवति ॥ पिशाचो व्यन्तर-जातिः ॥ ११६ ॥

मृत्रपिभ्यामिचः ॥ ११७ ॥

आभ्यामिचः प्रत्ययो भवति ॥ मृंत् प्राणत्यागे । मरिचमूषणम् ॥ त्रपौषि लज्जायाम् । त्रपिचा कुथा ॥ ११७ ॥

म्रियतेरीचण् ॥ ११८ ॥

मृंत् प्राणत्यागे । इत्यस्मादीचण् प्रत्ययो भवति ॥ मारीचो रावणमा-तुलः ॥ ११८ ॥

लषेरुचः कश्च ॥ ११९ ॥

लषी कान्तौ । इत्यस्मादुचः प्रत्ययो [भव] त्यन्त्यस्य च को भवति ॥ लकुचो वृक्षजातिः ॥ ११९ ॥

गुडेरूचट् ॥ १२० ॥

गुडत् रक्षायाम् । इत्यस्मादूचट् प्रत्ययो भवति ॥ गुडूची छिन्नरुहा ॥ कुटा-दित्वा[ द्वि ]त्वम् ॥ १२० ॥

सिवेर्डित् ॥ १२१ ॥

षिवूच् उतौ । इत्यस्माड्डिदूचट् प्रत्ययो भवति ॥ सूचः पिशुनः सि-भिश्च । सूची संधानकरणी ॥ १२१ ॥

चिमेर्डोचडञ्चौ ॥ १२२ ॥

चिमिभ्यां प्रत्येकं डोच डञ्च इति प्रत्ययौ भवतः । वचनभेदान्न यथासंख्यम् ॥

च्चिंगट् चयने । चोचो वृक्षविशेषः । चञ्चा तृणमयः पुरुषः ॥ डुमिंगट् प्रक्षेपणे । मोचा कदली । मञ्चः पर्यङ्कः ॥ १२२ ॥

कुटिकुलिकल्युदिभ्य इञ्चक् ॥ १२३ ॥

एभ्य इञ्चक् प्रत्ययो भवति ॥ कुटेः । कुटिञ्चः क्षुद्रकर्कटः ॥ कुलेः । कुलिञ्चो राशिः ॥ कलेः । कलिञ्च उपशाखावयवः ॥ उद आघाते सौत्रः । उदिञ्चः कोणो येन तूर्यं वाद्यते परपुष्टश्च ॥ १२३ ॥

तुदिमदिपद्यदिगुगमिकाचिभ्यश्छक् ॥ १२४ ॥

एभ्यश्छक् प्रत्ययो भवति ॥ तुदींत् व्यथने । तुच्छः स्तोकः ॥ मदैच् हर्षे । मच्छो मत्स्यः प्रमत्तपुरुषश्च । मच्छा स्त्री ॥ पदिंच् गतौ । पच्छः शिला ॥ अदंक् भक्षणे । अच्छो निर्मलः ॥ गुंड् शब्दे ॥ गुच्छः स्तबकः ॥ गम्लृ गतौ । गच्छः क्षुद्रवृक्षः ॥ कचि बन्धने । कच्छः कूर्मपादः कुक्षिर्नद्यवकुटारश्च । कच्छा जनपदः ॥ बाहुलकात्कत्वाभावः ॥ १२४ ॥

पीपूङो ह्रस्वश्च ॥ १२५ ॥

आभ्यां छक् प्रत्ययो [ भवति ] ह्रस्वश्च भवति ॥ पींङ्च् पाने । पिच्छं शकुनिपत्त्रम् । पिच्छो गुणविशेषः । यद्वान् पिच्छिल उच्यते ॥ पूङ् पवने । पुच्छं वालधिः ॥ १२५ ॥

गुलुञ्छपिलिपिञ्छैधिच्छादयः ॥ १२६ ॥

एते छप्रत्ययान्ता निपात्यन्ते । गुडेर्ल उम् चान्तः । गुलुञ्छः स्तबकः ॥ पीलेरिपि नोन्तो ह्रस्वश्च । पिलिपिञ्छो रक्षोविशेषः ॥ एधेरिट् च । एधिच्छो नगः ॥ आदिग्रहणात् पिञ्छादयोपि भवन्ति ॥ १२६ ॥

वियो जक् ॥ १२७ ॥

वींक् प्रजननकान्त्यसनखादनेषु च । इत्यस्माज्जक् प्रत्ययो भवति ॥ बीजमुत्पत्तिहेतुः ॥ १२७ ॥

पुवः पुन् च ॥ १२८ ॥

पूङ् पवने । इत्यस्माज्जक् प्रत्ययो [भव]त्यस्य च पुनित्यादेशो भवति ॥ पुञ्जो राशिः ॥ १२८ ॥

कुबः कुब्कुनौ च ॥ १२९ ॥

कुङ् शब्दे । इत्यस्माज्जक् प्रत्ययो भवत्यस्य च कुब् कुन् इत्यादेशौ भवतः ॥ कुब्जो वक्रानताङ्गो गुच्छश्च ॥ कुञ्जो हनुः पर्वतैकदेशश्च । निकुञ्जो गहनम् ॥ १२९ ॥

कुटेरजः ॥ १३० ॥

कुटन् कौटिल्ये । इत्यस्मादजः प्रत्ययो भवति ॥ कुटजो वृक्षविशेषः ॥ कु[ङ]ादित्वा[द्]ह्रस्वम् । कुटजी ॥ १३० ॥

भिषेर्भिषभिष्णौ च वा ॥ १३१ ॥

भिषेरजः प्रत्ययो [भवति] भिष भिष्ण इत्यादेशौ चास्य वा भवतः ॥ भिषिः सौत्रः । भिषजः । आदेशबलान्न गुणः । भिष्णजो वैद्यः । भेषजमौषधम् ॥ १३१ ॥

मुर्वेर्मुर् च ॥ १३२ ॥

मुर्वै बन्धने । इत्यस्मादजः प्रत्ययो [भव]त्यस्य च मुर् इत्यादेशो भवति ॥ मुरजो मृदङ्गः ॥ १३२ ॥

बलेर्वोन्तश्च वा ॥ १३३ ॥

बल प्राणनधान्यावरोधयोः । इत्यस्मादजः प्रत्ययो [भवति] वकारश्चान्तो वा भवति ॥ बल्वजो मुञ्जविशेषः । बलजा सबुसो धान्यपुञ्जः ॥ १३३ ॥

उटजादयः ॥ १३४ ॥

उटजादयः शब्दा अजप्रत्ययान्ता निपात्यन्ते ॥ वटेर्वस्य उत्वं च । उटजं मुनिकुटीरः ॥ आदिशब्दात् भूर्जभरुजादयो भवन्ति ॥ १३४ ॥

कुलेरिजक् ॥ १३५ ॥

कुल बन्धुसंस्त्यानयोः । इत्यस्मादिजक् प्रत्ययो भवति ॥ कुलिजं मानम् ॥ १३५ ॥

कृगोऽञ्जः ॥ १३६ ॥

करोतेरञ्जः प्रत्ययो भवति ॥ करञ्जो वृक्षजातिः ॥ १३६ ॥

झमेर्झः ॥ १३७ ॥

झमू अदने । इत्यस्माज्झः प्रत्ययो भवति ॥ झञ्झा सशीकरो मेघवातः ॥ १३७ ॥

लुषेष्टः ॥ १३८ ॥

लुष स्तेये । इत्यस्माट्टः प्रत्ययो भवति ॥ लोष्टो मृत्पिण्डः ॥ १३८ ॥

नमितनिजानिवनिसनो लुक् च ॥ १३९ ॥

एभ्यष्टः प्रत्ययो भवति लुक् चान्तस्य भवति ॥ णमं प्रह्वत्वे । नटो भरतपुत्रः ॥ तनूयी विस्तारे । तटं कूलम् ॥ जनैचि प्रादुर्भावे । जटा ग्रथितकेशसंघातः ॥ वन षन भक्तौ । वटो न्यग्रोधः ॥ सटाग्रथितः केशसंघातः ॥ १३९ ॥

जानिपणिकिजुभ्यो दीर्घश्च ॥ १४० ॥

एभ्यष्टः प्रत्ययो [भवति] दीर्घश्चैषां गुणापवादो भवति ॥ जनैचि प्रादुर्भावे । पणि व्यवहारस्तुत्योः । जाण्टः । पाण्टः । [वृ]क्षविशेषावेतौ ॥ किजू सौत्रौ । कीटः क्षुद्रजन्तुः ॥ जूटो मौलिः ॥ १४० ॥

घटाघाटाघण्टादयः ॥ १४१ ॥

एते टप्रत्ययान्ता निपात्यन्ते ॥ हन्तेर्घत्वघनश्च । घटा वृन्दम् ॥ घाटा स्वाङ्गम् ॥ घण्टा वाद्यविशेषः ॥ आदिग्रहणात् छटादयो भवन्ति ॥ १४१ ॥

दिव्यविश्रुकुकर्बिशकिकङ्किकृपिचपिचमिकम्येधिकर्किमर्किकक्खितृकृसृभृवृभ्योटः ॥ १४२ ॥

एभ्योटः प्रत्ययो भवति ॥ दिवूच् क्रीडादौ । देवटो देवकुलविशेषः शिल्पी च ॥ अव रक्षणादौ । अवटः प्रपातः कूपश्च ॥ श्रुंद् श्रवणे । श्रवटश्छत्रम् ॥ कुंक् शब्दे । कवट उच्छिष्टम् ॥ कर्ब गतौ । कर्बटं क्षुद्रपत्तनम् ॥ शक्लृंट् शक्तौ । शकटमनः ॥ ककुङ् गतौ । कङ्कटः संनाहः । कङ्कटं सीमा ॥ कृपौङ् सामर्थ्ये । कर्पटं वासः ॥ चप सान्त्वने । चपटो रसः ॥ चमू अदने । चमटो घस्मरः ॥ कमूङ् कान्तौ । कमटो वामनः ॥ एधि वृद्धौ । एधटो वल्मीकः ॥ कर्किमर्की सौत्रौ । कर्कटः कपिलः कुलीरश्च । कर्कटी त्रपुसी ॥ मर्कटः कपिः क्षुद्रजन्तुश्च ॥ कक्ख हसने । कक्खटः कर्कशः ॥ तॄ प्लवनतरणयोः । तरटः पीनः ॥ डुकृंग् करणे । करटः काकः करिकपोलश्च ॥ सृं गतौ । सरटः कृकलासः ॥ डुभृंग्क् पोषणे च । भरटः प्लवविशेषो भृत्यः कुलालश्च ॥ वृग्ट् वरणे । वरटः क्षुद्रधान्यं प्रहारश्च ॥ १४२ ॥

कुलिबिलिभ्यां कित् ॥ १४३ ॥

आभ्यां किदटः प्रत्ययो भवति ॥ कुल बन्धुसंस्त्यानयोः । कुलटा बन्धकी ॥ बिलत् वरणे । बिलटा नदी ॥ १४३ ॥

कपटकीकटादयः ॥ १४४ ॥

कपटादयः शब्दा अटप्रत्ययान्ता निपात्यन्ते ॥ कम्पेर्नलोपश्च । कपटं माया॥ ककेरत ईच । कीकटः कृपणः॥ आदिग्रहणात् लपटपर्पटादयो भवन्ति ॥ १४४ ॥

अनिशॄपॄवृललिभ्य आटः ॥ १४५ ॥

एभ्य आटः प्रत्ययो भवति ॥ अनक् प्राणने । अनाटः शिशुः ॥ शॄश् हिंसायाम् । शराटः शकुन्तः ॥ पॄश् पालनपूरणयोः । पराट आयुक्तकः ॥ वृङ्श् संभक्तौ । वराटः सेवकः ॥ ललिण् ईप्सायाम् । ललाटमलिकम् ॥ १४५ ॥

सृसृपेः कित् ॥ १४६ ॥

आभ्यां किदाटः प्रत्ययो भवति ॥ सृं गतौ । सृाटः पुरःसरः ॥ सृर्पं गतौ । सृपाटोल्पः कुमुदादिपत्रं च । सृपाटचुपानत्कुप्यमल्पपुस्तकश्च ॥ १४६ ॥

किरो लश्च वा ॥ १४७ ॥

किरतेः किदाटः प्रत्ययो [भवति] लश्चान्तो वा भवति ॥ किलाटो भक्ष्यविशेषः । किराटो वणिग् म्लेच्छश्च ॥ १४७ ॥

कपाटविराटशृङ्गाटप्रपुनाटादयः ॥ १४८ ॥

एत आटप्रत्ययान्ता निपात्यन्ते ॥ कम्पेर्नलोपश्च । कपाटोररिः । जपादीनां पो व इति वत्वे । कवाटः ॥ वृञ इत्वं च । विराटो राजा ॥ श्रयतेः शृङ्ग् च । शृङ्गाटं जलजविशेषो विपणिमार्गश्च ॥ प्रपूर्वात् पुणेर्नश्च । प्रपुनाट एडगजः ॥ आदिशब्दात् खल्वाटादयो भवन्ति ॥ १४८ ॥

चिरेरिटो भ् च ॥ १४९ ॥

चिरेः सौत्रादिटः प्रत्ययो भवति भकारश्चान्तादेशो भवति ॥ चिर्भिटी वालुङ्की ॥ १४९ ॥

टिण्टश्चर् च वा ॥ १५० ॥

चिरेष्टिण्टः प्रत्ययो भवति चर इति चास्यादेशो वा भवति ॥ चरिण्टी चिरिण्टी च प्रथमवयाः स्त्री ॥ १५० ॥

तृकृकृपिकम्पिकृषिभ्यः कीटः ॥ १५१ ॥

एभ्यः किरिटः प्रत्ययो भवति ॥ तॄ प्लवनतरणयोः तिरीटं कूलवृक्षो मुकुटं वेष्टनं च ॥ कृत् विक्षेपे । किरीटं मुकुटं हिरण्यं च ॥ कृपौङ् सामर्थ्ये । कृपीटं हिरण्यं जलं च ॥ कपुङ् चलने । कम्पीटं कम्पः कम्प्रं च ॥ कृषींत् विलेखने । कृषीटं जलम् ॥ १५१ ॥

खञ्जेररीटः ॥ १५२ ।

खजु गतिवैकल्ये । इत्यस्मादरीटः प्रत्ययो भवति ॥ खञ्जरीटः खञ्जनः ॥ १५२ ॥

गृजृदृवृभृभ्य उट उडश्च ॥ १५३ ॥

एभ्य उट उडश्च प्रत्ययौ भवतः । भिन्नविभक्तिनिर्देश उटस्योत्तरत्रानुवृत्त्यर्थः । अप्रकृतस्याप्युडस्येह विधानं लाघवार्थम् ॥ गृश् शब्दे । गरुटो गरुडश्च गरुत्मान् ॥ जृष्च् जरसि । जरुटो जरुडश्च वनस्पतिः ॥ दृश् विदारणे । दरुटो दरुडश्च बिडालः ॥ वृग्श् वरणे । वरुटो वरुडश्च मे[च]: ॥ भृश् भर्जने च । भरुटो भरुडश्च मे[च] एव ॥१५३॥

मङ्केर्मकमुकौ च ॥ १५४ ॥

मकुङ् मण्डने । इत्यस्मादुटः प्रत्ययो [भवति] मक मुक इत्यादेशौ चास्य भवतः ॥ मकुटो मुकुटश्च किरीटः ॥ १५४ ॥

नर्कुटकुक्कुटोत्कुरुटमुरुटपुरुटादयः ॥ १५५ ॥

एत उटप्रत्ययान्ता निपात्यन्ते ॥ नृतेः कश्च । नर्कुटो बन्दी ॥ कुके कोऽन्तश्च । कुक्कुटः कृकवाकः ॥ उत्पूर्वात्कृगः कुर् च । उत्कुरुटः कचवारपुञ्जः । मुरिपुर्योर्गुणाभावश्च । मुरुटो यद्वेण्वादिमूलमृजु कर्तुं न शक्यते ॥ पुरुटो जलजन्तुः । आदिशब्दात् स्थपुटादयो भवन्ति ॥ १५५ ॥

दुरो दृः कूटश्च दुर् च ॥ १५६ ॥

दुर्पूर्वात् दृणातेः किदूट उटश्च प्रत्ययौ [भवतो] दुर् चास्यादेशो भवति ॥ दुर्दुरूटो दुर्मुखः । दुर्दुरुटो देशकालवादी ॥ १५६ ॥

बन्धेः ॥ १५७ ॥

बन्धंश् बन्धने । इत्यस्मात्किदूटः प्रत्ययो भवति ॥ बधूटी प्रथमवयाः स्त्री ॥ १५७ ॥

चपेरेटः ॥ १५८ ॥

चप सान्त्वने । इत्यस्मादेटः प्रत्ययो भवति ॥ चपेटश्चपेटा वा हस्ततलाहतिः ॥ १५८ ॥

ग्रो णित् ॥ १५९ ॥

गॄत् निगरणे । इत्यस्माण्णिदेटः प्रत्ययो भवति ॥ गारेट ऋषिः ॥ १५९ ॥

कृशक्शाखेरोटः ॥ १६० ॥

एभ्य ओटः प्रत्ययो भवति ॥ डुकृंग् करणे । करोटो भृत्यः शिरः कपालं च । करोटं भाजनविशेषः ॥ शक्लृंट् शक्तौ । शकोटो बाहुः ॥ शाखृ श्लाखृ व्याप्तौ । शाखोटो वृक्षविशेषः ॥ १६० ॥

कपोटवकोटाक्षोटकर्कोटादयः ॥ १६१ ॥

एत ओटप्रत्ययान्ता निपात्यन्ते ॥ कबृङ् वर्णे । पश्च । कपोटो वर्णः किलवश्च ॥ वचेः कश्च । वकोटो बकः ॥ अश्नातेः सश्च परादिः । अक्षोटः फलवृक्षः ॥ कृगः कोन्तश्च । कर्कोटो नागः ॥ आदिशब्दादन्येपि ॥ १६१ ॥

वनिकणिकाश्युषिभ्यष्ठः ॥ १६२ ॥

एभ्यष्ठः प्रत्ययो भवति ॥ वन भक्तौ । वण्ठोनिविष्टः ॥ कण शब्दे । कण्ठः कंधरा ॥ काशृङ् दीप्तौ । काष्ठं दारु । काष्ठा दिगवस्था च ॥ उषू दाहे । ओष्ठो दन्तच्छदः ॥ १६२ ॥

पीविशिकुणिपृषिभ्यः कित् ॥ १६३ ॥

एभ्यः किट्ठः प्रत्ययो भवति ॥ पींङ्च् पाने । पीठमासनम् ॥ विशंत् प्रवेशने । विष्ठा पुरीषम् ॥ कुणत् शब्दोपकरणयोः । कुण्ठोतीक्ष्णः ॥ पृषू सेचने । पृष्ठोङ्कुशः शरीरैकदेशश्च ॥ १६३ ॥

कुषेर्वा ॥ १६४ ॥

कुषश् निष्कर्षे । इत्यस्माट्ठः प्रत्ययो भवति स च वा कित् [ भवति ] ॥ कुष्ठं व्याधिर्गन्धद्रव्यं च । कोष्ठः कुसूल उदरं च ॥ १६४ ॥

शमेर्लुक् च वा ॥ १६५ ॥

शमूं उपशमे । इत्यस्माट्ठः प्रत्ययो भवति लुक् चान्तस्य वा भवति ॥ शठो धूर्तः । शण्ठः स एव । नपुंसकं च ॥ १६५ ॥

पष्ठैधिठादयः ॥ १६६ ॥

पष्ठादयः शब्दाठप्रत्ययान्ता निपात्यन्ते ॥ पुषेः किद्दः पषादेशश्च । पष्ठः प्रस्थः पर्वतश्च ॥ एधतेरिद् च । एधिठं वनम् । एधिठो गिरिसरिद्ह्रदः ॥ आदिशब्दादन्येपि ॥ १६६ ॥

मृजृशृकम्यमिरमिरपिभ्योऽठः ॥ १६७ ॥

एभ्योऽठः प्रत्ययो भवति ॥ मृङ् प्राणत्यागे । मरठो दध्यतिद्रवीभूतं कृमिजातिः कण्ठः प्राणश्च ॥ जृष् जरसि । जरठः कठोरः ॥ शॄश् हिंसायाम् । शरठ आयुधं पापं क्रीडनशीलश्च ॥ कमूङ् कान्तौ । कमठो भिक्षाभाजनं कूर्मास्थि कच्छपो मयूरो वामनश्च ॥ अम गतौ । अमठः प्रकर्षगतिः ॥ रमिं क्रीडायाम् । रमठो देशः कृमिजातिः क्रीडनशीलो म्लेच्छो देवश्च विलातानाम् ॥ रप व्यक्ते वचने । रपठो विद्वान्मण्डूकश्च ॥१६७ ॥

पञ्चमाड्डः ॥ १६८ ॥

पञ्चमान्ताद्धातोर्डः प्रत्ययो भवति ॥ षन भक्तौ । षण्डो वनं वृषभश्च । बाहुलकात्सत्वाभावः ॥ भण शब्दे । भण्डः प्रहसनकरो बन्दी च ॥ चण शब्दे । चण्डः क्रूरः ॥ पणि व्यवहारस्तुत्योः । पण्डः शण्ठः ॥ गणण् संख्याने । गण्डः पौरुषयुक्तः पुरुषः ॥ मण शब्दे । मण्डो रश्मिरग्रमन्नविकारश्च ॥ वन भक्तौ । वण्डोल्पशेफो निश्चर्मामशिश्नश्च ॥ शमू दमूच् उपशमे । शण्ड उत्सृष्टः पशुर्क्लीबश्च ॥ दण्डो वनस्पतिमतानो राजशासनं नालं प्रहरणं च ॥ रमिं क्रीडायाम् । रण्डः पुरुषः । रण्डा स्त्री । रण्डमन्तःकरणम् । त्रयमपि स्वसंबन्धिशून्यमेवमुच्यते ॥ तमेस्तनेर्वा । तण्ड ऋषिः । वितण्डा तृतीयकथा ॥ गमेः । गण्डः कपोलः ॥ भामि क्रोधे । भाण्डमुपस्करः ॥ १६८ ॥

कण्यणिखनिभ्यो णिद्वा ॥ १६९ ॥

एभ्यो डः प्रत्ययो भवति स च णिद्वा [भवति] ॥ कण अण शब्दे । काण्डः शरः फलसंघातः पर्व च । कण्डं भूषणं पर्व च ॥ आण्डो मुष्कः । अण्डः स एव योनिविशेषश्च ॥ खनूग् अवदारणे । खाण्डः कालाश्मयो गुडः । खण्ड इक्षुविकारोन्यः । खण्डं शकलम् ॥ १६९ ॥

कुगुहुनीकुणितुणिपुणिमुणिशुन्यादिभ्यः कित् ॥ १७० ॥

एभ्यः किड्डः प्रत्ययो भवति ॥ कुङ् शब्दे । कुडो घटो हलं च ॥ गुङ् शब्दे । गुडो गोल इक्षुविकारश्च । गुडा संनाहः ॥ हुङ् दानादनयोः । हुडो मूर्खो मेषश्च ॥ णीञ् प्रापणे । नीडं कुलायः ॥ कुणत् शब्दोपकरणयोः । कुण्डं भाजनं जलाधारविशेषश्च । कुण्डो भर्तरि जीवति जारेण जातोपद्विन्द्रियश्च ॥ तुणत् कौटिल्ये । तुण्डं मुखम् ॥ पुणत् शुभे । पुण्डो भिन्नवर्णः ॥ मुणत् प्रतिज्ञाने । मुण्डः परिवापितकेशः ॥ शुनत् गतौ । शुण्डा सुरा हस्तिहस्तश्च ॥ आदिग्रहणादन्येभ्योपि भवति ॥ १७० ॥

ऋसृतृव्यालिह्यविचमिवमियमिचुरिकुहेरडः ॥ १७१ ॥

एभ्योडः प्रत्ययो भवति ॥ ऋक् गतौ । अरडस्तरुः ॥ सृ गतौ । सरडो भुजपरिसर्पस्तरुश्च ॥ तॄ प्लवनतरणयोः । तरडो वृक्षजातिः ॥ व्येञ् संवरणे । व्याडो दुःशीलो हिंस्रः पशुर्भुजगश्च ॥ लिहींक् आस्वादने । लेहडः श्वा चौर्यमासी च ॥ अव रक्षणादौ । अवडः क्षेत्रविशेषः ॥ चमु अदने । चमडः पशुजातिः ॥ टुवमु उद्गिरणे । वमडो लूताजातिः ॥ यमु उपरमे । यमडो वनस्पतिर्युगलं च ॥ चुरण् स्तेये । चोरडश्चोरः ॥ कुहणि विस्मापने । कुहड उन्मत्तकः ॥ १७१ ॥

विहडकहोडकुरडकेरडक्रोडादयः ॥ १७२ ॥

एतेडप्रत्ययान्ता निपात्यन्ते ॥ विपूर्वात् हन्तेरनो लुक् च । विहडः शकुनिर्मूढचित्तश्च ॥ कषेर्हः प्रत्ययोकारस्य च ओकारः ॥ कहोड ऋषिः ॥ कुरेर्गुणाभावश्च । कुरडो मार्जारः ॥ किरतेः केर् च । केरडश्चैराज्ये राजा ॥ क्रुशः किःप्रत्ययोकारस्य च ओकारः ॥ क्रोडः किरिरङ्कश्च ॥ आदिग्रहणात् लहोडादयो भवन्ति ॥ १७२ ॥

जॄकॄतॄशॄसृभृवृभ्योण्डः ॥ १७३ ॥

एभ्योण्डः प्रत्ययो भवति ॥ जॄष् जरसि । जरण्डोतीतवयस्कः ॥ कॄत् विक्षेपे । करण्डः समुद्रः कृमिजातिश्च ॥ तॄ प्लवनतरणयोः । तरण्डः प्लवो वायुश्च । शॄश् हिंसायाम् । शरण्डो हिंस्र आयुधं च ॥ सृ गतौ । सरण्डः कृमिजातिरीलिका वायुर्भूतसंघातस्तृणसमवायश्च ॥ डुभृञ् पोषणे च । भरण्डो भाण्डजातिः पक्षी च ॥ वृगृङ् वरणे । वरण्डः कुड्यं तृणकाष्ठादिभारश्च ॥ १७३ ॥

पूगो गादिः ॥१७४॥

पूगश् पवने । इत्यस्माद्गकारादिरण्डः प्रत्ययो भवति ॥ पौगण्डो विकलाङ्गो युवा च ॥१७४॥

वनेस्त् च ॥१७५॥

वन भक्तौ । इत्यस्मादण्डः प्रत्ययो भवति तकारश्चान्तादेशो भवति ॥ वतण्ड ऋषिः ॥१७५॥

पिचण्डैरण्डखरण्डादयः ॥१७६॥

एतेण्डप्रत्ययान्ता निपात्यन्ते ॥ पिचेरगुणत्वं च । पिचण्डो लघुलगुडः ॥ ईरेर्गुणश्च । एरण्डः पञ्चाङ्गुलः ॥ खादृ भक्षणे । अन्त्यस्वरादेररादेशश्च । खरण्डः सर्वर्तुकम् ॥ आदिग्रहणात् कूष्माण्डशयण्डशयाण्डादयोपि भवन्ति ॥१७६॥

लगेरुडः ॥ १७७ ॥

लगे सङ्गे । इत्यस्मादुडः प्रत्ययो भवति ॥ लगुडो यष्टिः ॥ गृजड्ढब्भृभ्यस्तु उडो विहित एव ॥ १७७ ॥

कुसेरुण्डक् ॥ १७८ ॥

कुसच् श्लेषे । इत्यस्मादुण्डक् प्रत्ययो भवति ॥ कुसुण्डो वपुष्मान् ॥१७८॥

शमिषणिभ्यां ढः ॥ १७९ ॥

आभ्यां ढः प्रत्ययो भवति ॥ शमूच् उपशमे । शण्ढः नपुंसकम् ॥ षन भक्तौ । षण्ढः स एव । बाहुलकात्सत्वाभावः ॥ १७९ ॥

कुणेः कित् ॥ १८० ॥

कुणत् शब्दोपकरणयोः । इत्यस्मात्किड्ढः प्रत्ययो भवति ॥ कुण्ढो धूर्तः बाहुलकान्न दीर्घः ॥ १८० ॥

नञः सहेः षा च ॥ १८१ ॥

नञ्पूर्वात् षहि मर्षणे । इत्यस्माड्ढः प्रत्ययो भवति षा चास्यादेशो भवति ॥ अषाढा नक्षत्रम् ॥ १८१ ॥

इणुर्विशावेर्णिपृकृवृदृजृदृसृपिवणिभ्यो णः ॥ १८२ ॥

एभ्यो णः प्रत्ययो भवति ॥ इणक् गतौ । एणः कुरङ्गः ॥ उर्वै हिंसार्थम् । ऊर्णा मेषादिलोम भुवोरन्तरावर्तश्च ॥ शौच् तक्षणे । शाणः परिमाणं

शक्तेर्जनं च ॥ वेणृग् गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेण्णा कृष्णवेण्णा च नाम नदी ॥ पृश् पालनपूरणयोः । पर्णः पत्रं शिरश्च ॥ कृत् विक्षेपे । कर्णः श्रवणं कौन्तेयश्च ॥ वृग्श् वरणे । वर्णः शुक्लादिर्ब्राह्मणादिरकारादिर्यशः स्तुतिः प्रकारश्च ॥ तृ प्लवनतरणयोः । तर्णो वत्सः ॥ जृष्च् जरसि । जर्णश्चन्द्रमा वृक्षः कर्कः क्षयधर्मा शकुनिश्च ॥ दृङ्त् आदरे । दर्णः पर्णम् ॥ सृं गतौ । सर्णः सरीसृपजातिः ॥ पणि व्यवहारस्तुत्योः । पण्णं व्यवहारः ॥ १८२ ॥

घृवीह्वाशुष्युषितृषिकृष्यर्तिभ्यः कित् ॥ १८३ ॥

एभ्यः किण्णः प्रत्ययो भवति ॥ घृं सेचने । घृणा कृपा ॥ वींक् प्रजननादिषु । वीणा वल्लकी ॥ ह्वेंग् स्पर्धाशब्दयोः । हूणो म्लेच्छजातिः ॥ शुषंच् शोषणे । शुष्णो निदाघः ॥ उषू दाहे । उष्णः स्पर्शविशेषः ॥ ञितृषच् पिपासायाम् । तृष्णा पिपासा । कृषींत् विलेखने । कृष्णो वर्णो विष्णुर्मृगश्च ॥ ऋंक् गतौ । ऋणं वृद्धिधनं जलदुर्गभूमिश्च ॥ १८३ ॥

द्रोर्वा ॥ १८४ ॥

द्रुं गतौ । इत्यस्माण्णः प्रत्ययो [भवति] स च किद्वा भवति ॥ द्रुणा ज्या । द्रोणश्चतुराढकं पाण्डवाचार्यश्च । द्रोणी । गौरादित्वाड्डीः । नौः ॥ १८४ ॥

स्थाक्षुतोरूच्च ॥ १८५ ॥

एभ्यो णः प्रत्ययो भवत्यूकारश्चान्तादेशो भवति ॥ ष्ठां गतिनिवृत्तौ । स्थूणा तन्तुधारिणी गृहधारिणी शरीरधारिणी लोहप्रतिमा व्याधिविशेषश्च ॥ टुक्षुक् शब्दे । क्षूणमपराधः ॥ तुंक् वृत्त्यादिषु । तूण इषुधिः ॥ १८५ ॥

भ्रूणतृणगुणकार्ष्णतीक्ष्णश्लक्ष्णाभीक्ष्णादयः ॥ १८६ ॥

एते णप्रत्ययान्ता निपात्यन्ते ॥ भृगो भ्रू च । भ्रूणो निहीनोर्भकः स्त्रैणगर्भश्च ॥ तरतेर्ह्रस्वश्च । तृणं शष्पादिः ॥ गायतेर्गमेर्गृणातेर्वा गुभावश्च । गुण उपकार आश्रितोप्रधानं ज्या च ॥ कृगो वृद्धिः कोन्तश्च । कार्ष्णः शिल्पी ॥ तिजेर्दीर्घः सश्च परादिः । तीक्ष्णं निशितम् ॥ श्लिषेः सोन्तोत्वतः । श्लक्ष्णमकर्कशं सूक्ष्मं च ॥ अभिपूर्वात् इषेः किच्च सोन्तः । अभीक्ष्णमजस्रम् ॥ आदिग्रहणादन्येपि ॥ १८६ ॥

तृकृवृपृभृवृभुरुहिलक्षिविचक्षिचुकिशुकितक्र्यक्रिमाङ्किकाङ्क्षि-
चरिसमीरिरणः ॥ १८७ ॥

एभ्योणः प्रत्ययो भवति ॥ तृ प्लवनतरणयोः । तरणम् ॥ कृत् विक्षेपे ।

करणम् ॥ शॄश् हिंसायाम् । शरणं गृहम् ॥ पॄश् पालनपूरणयोः । परणम् ॥ डुभृंग्क् पोषणे च । भरणम् ॥ वृग्ट् वरणे । वरणो वृक्षः सेतुबन्धश्च । वरणं कन्याप्रतिपादनम् ॥ श्रुंट् श्रवणे । श्रवणः कर्णो भिक्षुश्च ॥ रुक् शब्दे । रुङ् रेषणे च वा । रवणः करभोर्मिर्द्रुमो वायुर्भृङ्गः शकुनिः सूर्यो घण्टा च ॥ रुहं जन्मनि । रोहणो गिरिः॥ लक्षीण् दर्शनाङ्कनयोः। लक्षणं व्याकरणं शुभाशुभसूत्रकं मषीतिलकाद्यङ्कनं च ॥ चक्षिक् व्यक्तायां वाचि । विचक्षणो विद्वान् ॥ चुकण् व्यथने । चुक्कणो व्यायामशीलः ॥ बुक भाषणे । बुक्कणः श्वा वावदूकश्च ॥ तगु गतौ । तङ्कणा जनपदः ॥ अगु गतौ । अङ्कणमजिरम् ॥ मकुङ् मण्डने । मङ्कुण ऋषिः ॥ ककुङ् गतौ । कङ्कणं प्रतिसरः ॥ चर भक्षणे च । चरणः पादः ॥ ईरिक् गतिकम्पनयोः । सम्पूर्वः । समीरणो वातः ॥ १८७ ॥

कॄगॄपॄकृपिवृषिभ्यः कित् ॥ १८८ ॥

एभ्यः किदणः प्रत्ययो भवति ॥ कॄत् विक्षेपे । किरणो रश्मिः ॥ गॄत् निगरणे । गिरणो मेघ आचार्यो ग्रामश्च ॥ पॄश् पालनपूरणयोः । पुरणः समयथिला समुद्रः पर्वतविशेषश्च ॥ कृपौङ् सामर्थ्ये । कृपणः कीनाशः ॥ वृषू सेचने ॥ वृषणो मुष्कः ॥ १८८ ॥

धृषिवहेरिश्चोपान्त्यस्य ॥ १८९ ॥

आभ्यां किदणः प्रत्ययो भवति इश्चोपान्त्यस्य भवति ॥ ञिधृषाट् प्रागल्भ्ये । धिषणो बृहस्पतिः । धिषणा बुद्धिः ॥ वहीं प्रापणे । विहण ऋषिः पाठश्च ॥ १८९ ॥

चिक्कणकुक्कणकूकणकुङ्कणत्रवणोल्वणोरणलवणवङ्क्षणादयः ॥ १९० ॥

एते किदणप्रत्ययान्ता निपात्यन्ते ॥ चिनोतेश्चिक्क् च । चिक्कणः पिच्छिलः ॥ कुकिकृगोः कोन्तश्च । कुक्कणः शकुनिः ॥ कूकण ऋषिः ॥ कुकेः स्वरात्परो नोन्तश्च । कुङ्कणा जनपदः ॥ त्रपेर्वश्च ॥ त्रवणो देशः ॥ वलेर्वस्य उत् । वोन्तश्च । उल्वणः स्फारः ॥ अर्तेरुर् च । उरणो मेषः ॥ लीयतेः क्लिश्यतेः लवयतेर्वा लवादेशश्च । लवणं गुणो द्रव्यं च ॥ वञ्चेः सः परादिर्नलोपाभावश्च । वङ्क्षणमूरुमूलसंधिः ॥ आदिशब्दात् ज्योतिरिङ्गणतुरणभुरणादयो भवन्ति ॥ १९० ॥

कृपिविषिवृषिधृषिमृषियुषिकुहिप्रहेराणक् ॥ १९१ ॥

एभ्य आणक् प्रत्ययो भवति । कृपौङ् सामर्थ्ये । कृपाणः खड्गः ॥ विषू सेचने । विषाणं शृङ्गं करिदन्तश्च ॥ वृषू सेचने । वृषाणः ॥ ञिधृषाट् प्रागल्भ्ये ।

धृषाणो देवः ॥ मृषू सहने च । मृषाणः ॥ शुषि सेवने सौत्रः । शुषाणः ॥ द्रुहौच् जिघांसायाम् । द्रुहाणो मुखरः ॥ ग्रहीश् उपादाने । गृहाणः ॥ वृषाणादयः स्वप्रकृत्यर्थवाचिनः सर्वेपि कर्तरि कारके विशेषाः ॥ १९१ ॥

पषो णित् ॥ १९२ ॥

पषी बाधनस्पर्शनयोः। इत्यस्मादाणक् प्रत्ययो भवति स च णित् [भवति]॥ पाषाणः प्रस्तरः ॥ १९२ ॥

कल्याणपर्याणादयः ॥ १९३ ॥

कल्याणादयः शब्दा आणक्प्रत्ययान्ता निपात्यन्ते ॥ कलेर्योन्तश्च । कल्याणं श्रेयसीयसम् ॥ परिपूर्वात् इणो लुक् च । पर्याणमश्वादीनां पृष्ठच्छदः ॥ आदिशब्दात् ढेक्काणबोक्काणकेक्काणादयोपि भवन्ति ॥ १९३ ॥

द्रुहृवृहिदक्षिभ्य इणः ॥ १९४ ॥

एभ्य इणः प्रत्ययो भवति ॥ द्रुं गतौ । द्रविणं द्रव्यम् ॥ हृंग् हरणे । हरिणो मृगः ॥ वृह वृद्धौ । बर्हिणो मयूरः ॥ दक्षि शैघ्र्ये च । दक्षिणः कुशलोऽनुकूलश्च । दक्षिणा दिग् ब्रह्मदेयं च ॥ १९४ ॥

ऋद्रुहेः कित् ॥ १९५ ॥

आभ्यां किदिणः प्रत्ययो भवति ॥ ऋश् गतौ । ऋरिणमूषरं कुञ्जो वनदुर्गं च ॥ द्रुहौच् जिघांसायाम् । द्रुहिणो ब्रह्मा क्षुद्रजन्तुश्च ॥ १९५ ॥

ऋकृवृधृदारिभ्य उणः ॥ १९६ ॥

एभ्य उणः प्रत्ययो भवति ॥ ऋंक् गतौ । अरुणः सूर्यसारथिस्तथा वर्णश्च॥ कृत् विक्षेपे । करुणा दया । करुणः करुणाविषयः । करुणं दैन्यम् ॥ वृग् भरणे । वरुणः प्रचेताः ॥ धृंग् धारणे । धरुणो धर्तायुक्तो लोकश्च ॥ दृश् विदारणे । णौ । दारुण उग्रः ॥ १९६ ॥

क्षः कित् ॥ १९७ ॥

क्षिं क्षये । इत्यस्मात्किदुणः प्रत्ययो भवति ॥ क्षुणो व्याधिः क्षामः क्रोध उन्मत्तश्च ॥ १९७ ॥

भिक्षुणी ॥ १९८ ॥

भिक्षेरुणः प्रत्ययो भवति ङीश्च निपात्यते ॥ भिक्षुणी व्रतिनी ॥ १९८ ॥

गादाभ्यामेरणक् ॥ १९९ ॥

आभ्यामेरणक् प्रत्ययो भवति । गैं शब्दे । गेरणो मेष उद्गाता रङ्गोपजीवी

च । गेष्णं साम मुखं च । रात्रिगेष्णो रङ्गोपजीवी । स्त्रुगेष्णा किंनरी ॥ डुदांग्क् दाने । देष्णो बाहुर्दानशीलश्च । चारुदेष्णः सात्यभामेयः । स्त्रुदेष्णा विराटपत्नी ॥ १९९ ॥

दम्यमितमिमावापूधूगृजृहसिवस्यसिवितसिमसीण्भ्यस्तः ॥ २०० ॥

एभ्यस्तः प्रत्ययो भवति ॥ दमूच् उपशमे । दन्तो दशनो हस्तिदंष्ट्रा च ॥ अम गतौ । अन्तोवसानं धर्मः समीपं च ॥ तमूच् काङ्क्षायाम् । तन्तः खिन्नः ॥ मांक् माने । मातमन्तःप्रविष्टम् ॥ वांक् गतिगन्धनयोः । वातो वायुः ॥ पूग्श् पवने । पोतो नौरभिर्बालश्च ॥ धूग्श् कम्पने । धोतो धूमः श [ठ] ो वातश्च ॥ गॄत् निगरणे । गर्तः श्वभ्रम् ॥ जॄष्च् जरसि । जर्तः प्रजननं राजा च ॥ हसे हसने । हस्तः करो नक्षत्रं च ॥ वसूच् स्तम्भे । वस्तश्छागः ॥ असूच् क्षेपणे । अस्तो गिरिः ॥ तसूच् उपक्षये । वितस्ता नदी ॥ मसैच् परिणामे । मस्तो मूर्धा ॥ इण्क् गतौ । एतो हरिणो वर्णो वायुः पथिकश्च ॥ २०० ॥

शीरीभूदूमूघृपाधागृचित्यर्त्यञ्जिपुसिमुसिबुसिविसिरमिधुर्विपूर्विभ्यः कित् ॥ २०१ ॥

एभ्यः कित्तः प्रत्ययो भवति ॥ शीङ्क् स्वप्ने । शीतं स्पर्शविशेषः ॥ रींश् गतिरेषणयोः । रीतं सुवर्णम् ॥ भू सत्तायाम् । भूतो ग्रहः । भूतं पृथिव्यादि ॥ दूङ्च् परितापे । दूतो वचोहरः ॥ मूङ् बन्धने । मूतो दध्यर्थं क्षीरे तक्रसेको वस्त्रावेष्टनबन्धनमात्रमन्यालानपाशो बन्धनमात्रं धान्यादिपुटश्च ॥ घृं सेचने । घृतं सर्पिः ॥ पां पाने । पीतं वर्णविशेषः ॥ डुधांग्क् धारणे च । धाग इति हिः । हितमुपकारि ॥ चिति संज्ञाने । चित्तं मनः ॥ ऋक् गतौ । ऋतं सत्यम् ॥ अञ्जौप् व्यक्तिम्रक्षणगतिषु । अक्तो म्रक्षितो व्यक्तीकृतः परिमितः प्रेतश्च ॥ पुसच् विभागे । पुस्तो लेख्यपत्रसंचयो लेप्यादिकर्म च ॥ मुसच् खण्डने । मुस्ता गन्धद्रव्यम् ॥ बुसच् उत्सर्गे । बुस्तः प्रहसनम् ॥ विसच् प्रेरणे । विसं सुवर्णमानम् ॥ रमिं क्रीडायाम् । सुरतं मैथुनम् ॥ धुर्वै हिंसायाम् । धूर्तः शठः ॥ पूर्व पूरणे । पूर्तः पुण्यम् ॥ २०१ ॥

लूम्रो वा ॥ २०२ ॥

आभ्यां तः प्रत्ययो [भवति] स च किद्वा भवति ॥ लूग्श् छेदने । लूता क्षुद्रजन्तुः । लोतो बाष्पं लवनं वस्तः कीटजातिश्च ॥ मृत् प्राणत्यागे । मृतो म्रियमाणः । मर्त ऋषिः प्राणी पुरुषश्च ॥ २०२ ॥

सुसितनितुसेर्दीर्घश्च वा ॥ २०३ ॥

एभ्यः क्तिः प्रत्ययो [भवति] दीर्घश्च वा भवति ॥ षुंग्ट् अभिषवे । सूतः सारथिः । सुतः पुत्रः॥ षिंग्ट् बन्धने । सीता जनकात्मजा सस्यं हलमार्गश्च । सितो वर्णः॥ तनूयी विस्तारे । तातः पिता पुत्रेष्टनाम च । ततं विस्तीर्णं वाद्यविशेषश्च । तुस शब्दे । तूस्तानि वस्त्रदशाः । तुस्ता जटा प्रदीपनं च ॥ २०३ ॥

पुतपित्तनिमित्तोतशुक्ततिक्तलिप्तसूरतमुहूर्तादयः॥ २०४ ॥

एते क्तप्रत्ययान्ता निपात्यन्ते ॥ पूडो ह्रस्वश्च । पुतः स्फिक् ॥ पीड-स्तोन्तश्च । पित्तं मायुः ॥ निपूर्वात् मिनोतेर्मित् च । निमित्तं हेतुर्दिव्यज्ञानं च ॥ उभेर्लुक् च । उताशङ्कार्थमव्ययम् ॥ शकेः शुचेर्वा शुक्भावश्च । शुक्तं कल्कजातिः ॥ ताडयतेस्तकतेस्तिजेर्वा तिक् च । तिक्तो रसविशेषः ॥ लीयतेः पोन्तो ह्रस्वश्च । लिप्तं श्लेषोंशादेशश्च ॥ सुपूर्वात् रमेः सोर्दीर्घश्च । सूरतो दमितो हस्त्यन्यो वा दान्तः ॥ हुर्छेर्मुश्च धात्वादिः। मुहूर्तः कालविशेषः॥ आदिग्रहणात् अयुतनियुतादयो भवन्ति ॥ २०४ ॥

कृगो यङः ॥ २०५ ॥

करोतेर्यङन्तात्क्तिः प्रत्ययो भवति ॥ चेक्रीयितः पूर्वाचार्याणां यङ्प्रत्ययसंज्ञा ॥ २०५ ॥

इवर्णादिर्लुपि ॥ २०६ ॥

करोतेर्यङो लुपि। इवर्णादिस्तः प्रत्ययो भवति ॥ चर्करितं चर्करीतं यङ्लुबन्तस्याख्ये ॥ २०६ ॥

दृपृभृमृशीयजिखलिवलिपर्विपच्यमिनमितमिदृशिहर्यि-
कङ्किभ्योतः ॥ २०७ ॥

एभ्योतः प्रत्ययो भवति ॥ दृंङ्त् आदरे । दरत आदरः ॥ पृंक् पालनपूरणयोः । परतः कालः ॥ डुडुभृंग्क् पोषणे च । भरतः प्रथमचक्रवर्ती हिमवत्समुद्रमध्यक्षेत्रं च । मृंत् प्राणत्यागे । मरतो मृत्युरग्निः प्राणी च ॥ शीङ्क् स्वप्ने । शयतो निद्रालुश्चन्द्रः स्वप्नोजगरश्च ॥ यजीं देवपूजासंगतिकरणदानेषु । यजतो यज्वाग्निश्च ॥ खल संचये च । खलतः शीर्णकेशशिराः ॥ वलि संवरणे । वलतः कुसूलः ॥ पर्व पूरणे । पर्वतो गिरिः ॥ डुपचींष् पाके । पचतोग्निरादित्यः पाल इन्द्रश्च ॥ अम गतौ ।अमतो मृत्युर्जीव आतङ्कश्च ॥ णमं प्रह्वत्वे । नमतो

नटो देव ऊर्णास्तरणं हृस्वश्च ॥ तमूच् काङ्क्षायाम् । तमतो निर्बन्धाकाङ्क्षी भूमश्च । दृशूं प्रेक्षणे । दर्शतो द्रष्टाविश्व ॥ हर्य क्लान्तौ । हर्यतो वाजुरश्वः कान्तो रश्मि-र्यज्ञश्च ॥ ककुङ् गतौ । कङ्कतः केशमार्जनम् ॥ २०७ ॥

पृषिरञ्जिसिकिकालावृभ्यः कित् ॥२०८॥

एभ्यः किदतः प्रत्ययो भवति ॥ पृषू सेचने । पृषतो मृगः॥ रञ्जीं रागे । रजतं रूप्यम् ॥ सिकिः सौत्रः। सिकता वालुका ॥ कैं शब्दे । कतो गोत्रकृत् ॥ लांक् आदाने । लता वल्ली । वृगट् वरणे । व्रतं शास्त्रतो नियमः ॥ २०८ ॥

कृवृकल्यालिचिलिविलीलिलानाथिभ्य आतक् ॥ २०९ ॥

एभ्य आतक् प्रत्ययो भवति ॥ कृत् विक्षेपे । किरातः शबरः ॥ वृगट् वरणे । व्रातः समूह उत्सेधजीविसंघश्च ॥ कलि शब्दसंख्यानयोः । कलातो ब्रह्मा ॥ अली भूषणादौ । अलातमुल्मुकम् ॥ चिलत् वसने । चिलाता म्लेच्छाः ॥ विलत् वरणे । विलातः शवाच्छादनवस्त्रम् ॥ इलत् गत्यादौ । इलातो नगः ॥ लांक् आदाने । लातो मृत्तिकादानभाजनम् ॥ नाथृङ् उपतापैश्वर्याशीःषु च । नाथात आहारः प्रजापतिश्च ॥ २०९ ॥

हृश्यारुहिशोणिपलिभ्य इतः ॥२१०॥

एभ्य इतः प्रत्ययो भवति ॥ हंग् हरणे । हरितो वर्णः ॥ श्यैंङ् गतौ । श्येतो वर्णो मृगो मत्स्यः श्येनश्च ॥ रुहं जन्मनि । रोहितो वर्णो मत्स्यो मृग-जातिश्च । लत्वे । लोहितो वर्णः । लोहितमसृक् ॥ शोणृ वर्णगत्योः । शोणितं रुधि-रम् ॥ पल गतौ । पलितः श्वेतकेशः ॥ २१० ॥

नञ आपेः ॥ २११ ॥

नञ् पूर्वात् आपूंट् व्याप्तौ । इत्यस्मादितः प्रत्ययो भवति ॥ नापितः का-रुविशेषः॥ २११ ॥

कुशिपिशिपृषिकुषिकुस्युचिभ्यः कित् ॥२१२॥

एभ्यः किदितः प्रत्ययो भवति ॥ कुशं आह्वानरोदनयोः । कुशितं पाप-म् ॥ पिशत् अवयवे । पिशितं मांसम् ॥ पृषू सेचने । पृषितं वारिबिन्दुः ॥ कुषश् निष्कर्षे । कुषितं पापम् ॥ कुसच् श्लेषे । कुसित ऋषिः । कुसितमृणं श्लिष्टं च ॥ उचच् समवाये । उचितं स्वभावो योग्यं चिरानुयातं श्रेष्ठं च ॥ २१२ ॥

हृग ईतण् ॥ २१३ ॥

हंग् हरणे । इत्यस्मादीतण् प्रत्ययो भवति ॥ हारीतः पक्ष्यृषिश्च ॥२१३॥

अदो भुवो डुतः ॥ २१४ ॥

अद्पूर्वात् भुवो डुतः प्रत्ययो भवति ॥ अद् विस्मितं भवति तेन तस्मिन्वा मनः । अद्भुतमाश्चर्यम् ॥ २१४ ॥

कुलिमयिभ्यामूतक् ॥ २१५ ॥

आभ्यामूतक् प्रत्ययो भवति ॥ कुल बन्धुसंस्त्यानयोः । कुलूता जनपदः ॥ मयि गतौ । मयूता वसतिः ॥ २१५ ॥

जीवेर्म च ॥ २१६ ॥

जीव प्राणधारणे । इत्यस्मादूतक् प्रत्ययो भवति मश्चान्तादेशो भवति ॥ जीमूतो मेघो गिरिश्च ॥ २१६ ॥

कर्बेरोतः प् च ॥ २१७ ॥

कर्बृङ् वर्णे । इत्यस्मादोतः प्रत्ययो [ भवति ] पश्चान्तादेशो भवति ॥ कपोतः पक्षी वर्णश्च ॥ २१७ ॥

आस्फायेर्डित् ॥ २१८ ॥

आङ्पूर्वात् स्फायैङ् वृद्धौ । इत्यस्माड्डिदोतः प्रत्ययो भवति ॥ आस्फोता नामौषधिः ॥ २१८ ॥

जृविशिभ्यामन्तः ॥ २१९ ॥

आभ्यामन्तः प्रत्ययो भवति ॥ जृष्नृ जरसि । जरन्तो भूतग्रामो वृद्धो माहिषश्च ॥ विशंत् प्रवेशने । वेशन्तः पल्वलं वह्निभोगप्रापवर्गं आकाशं च ॥ २१९ ॥

रुहिनन्दिजीविप्राणिभ्यष्टिदाशिषि ॥ २२० ॥

एभ्य आशिषि टिदन्तः प्रत्ययो भवति ॥ रुहं जन्मनि । रोहतात् । रोहन्तो वृक्षः । रोहन्त्योषधिः ॥ टुनदु समृद्धौ । नन्दतात् । नन्दन्तः सखानन्दश्च । नन्दन्ती सखी ॥ जीव प्राणधारणे । जीवतात् । जीवन्त आयुष्मान् । जीवन्ती शाकः ॥ अनक् प्राणने । प्राण्यात् । प्राणन्तो वायू रसायनं च । प्राणन्ती स्त्री ॥ २२० ॥

तॄजिभूवदिवहिवसिभास्यदिसाधिमदिगडिगण्डिमण्डिनन्दिरेविभ्यः ॥ २२१ ॥

एभ्यष्टिदन्तः प्रत्ययो भवति । आशिषीत्येके ॥ तॄ प्लवनतरणयोः । तरन्त आदित्यो भेकश्च । तरन्ती स्त्री ॥ जिं अभिभवे । जयन्तो रुद्रेणुर्ध्वज इन्द्रपुत्रो

जम्बूद्वीपपाधिमद्वारं पाथिमानुत्तरविमानं च । अवन्त्युदयनपितृष्वसा ॥ भू सत्तायाम् । भवन्तः कालः । भवन्ती ॥ वद व्यक्तायां वाचि । वदन्तः । वदन्ती ॥ वहीं प्रापणे । वहन्तो रथोनड्वान्मयरेणुर्वायुश्च । वहन्ती ॥ वसं निवासे । वसन्त ऋतुः ॥ भासि दीप्तौ । भासन्तः सूर्यः । भासन्ती । ण्यन्तोपि । भासयन्तः सूर्यः ॥ अदंक् भक्षणे । अदन्तः । अदन्ती ॥ साधंट् संसिद्धौ । साधन्तो भिक्षुः । ण्यन्तोपि । साधयन्तो भिक्षुः । साधयन्ती ॥ मदैच् हर्षे । णौ । मदयन्तः । मदयन्ती पुष्पगुल्मजातिः ॥ गड सेचने । गडन्तो जलदः । ण्यन्तोपि । गडयन्तः । गडयन्ती ॥ गडु वदनैकदेशे । ण्यन्तः । गण्डयन्तो मेघः ॥ मडु भूषायाम् । ण्यन्तः । मण्डयन्तः प्रसाधकोलंकार आदर्शश्च ॥ टुनदु समृद्धौ । ण्यन्तः । नन्दयन्तः सुखकृद्राजा हिरण्यं सुखं च । नन्दयन्ती ॥ रेवृङ् पवि गतौ । रेवन्तः सूर्यपुत्रः ॥ अनुक्तार्था धात्वर्थकर्त्रर्थाः ॥ २२१ ॥

सीमन्तहेमन्तभदन्तदुष्वन्तादयः ॥ २२२ ॥

एतेन्तप्रत्ययान्ता निपात्यन्ते ॥ सिनोतेः सीम् च । सीमन्तः केशमार्गो ग्रामक्षेत्रान्तश्च ॥ हन्तेर्हिनोतेर्वा हेम् च । हेमन्त ऋतुः ॥ भन्दतेर्नलुक् च । भदन्तो निर्ग्रन्थेषु शाक्येषु च पूज्यः ॥ दुषेर्वोन्तश्च । दुष्वन्तो राजा । आदिग्रहणादन्येपि ॥ २२२ ॥

शकेरुन्तः ॥ २२३ ॥

शकूंट् शक्तौ । इत्यस्मादुन्तः प्रत्ययो भवति ॥ शकुन्तः पक्षी ॥ २२३ ॥

कषेर्डित् ॥ २२४ ॥

कष हिंसायाम् । इत्यस्माड्डिदुन्तः प्रत्ययो भवति ॥ कुन्त आयुधम् ॥ २२४ ॥

कमिप्रुगार्तिभ्यस्थः ॥ २२५ ॥

एभ्यस्थः प्रत्ययो भवति ॥ कमूङ् कान्तौ । कन्था प्रावरणं नगरं च ॥ प्रुङ् गतौ । प्रोथः प्रियो युवा सूकरमुखो घोणा च ॥ गैं शब्दे । गाथा श्लोक आर्या वा ॥ ऋंक् गतौ । अर्थो जीवाजीवादिपदार्थः प्रयोजनमभिधेयं धनं वाञ्छा निवृत्तिश्च ॥ २२५ ॥

अवात्तोच्च वा ॥ २२६ ॥

अवपूर्वात् गायतेस्थः प्रत्ययो [भव]त्यकारान्तादेशो वा भवति ॥ अवगथः । अवगाथोक्षसंघातः प्रातःसवनं स्वस्थानं साम सन्ध्या च ॥ २२६ ॥

नीनूरमिनृतुदिवचिरिचिसिचिश्विहनिपागोपावोद्भ्यः क्थन् ॥ २२७॥

एभ्यः क्थन्प्रत्ययो भवति ॥ णींञ् प्रापणे । नीथं जलम् । सुनीथो नाम राजा नीतिमान्धर्मशीलो ब्राह्मणश्च ॥ णूत् स्तवने । नूथं तीर्थम् ॥ रमिं क्रीडायाम् । रथः स्यन्दनः ॥ तॄ प्लवनतरणयोः । तीर्थं जलाशयावगाहनमार्गः पुण्यक्षेत्रमाचार्यश्च ॥ तुदींत् व्यथने । तुत्थं चक्षुष्यो धातुविशेषः ॥ वचंक् भाषणे । उक्थं शास्त्रं सामवेदश्च । उक्थानि सामानि ॥ रिचृंपी विरेचने । रिक्थं धनम् ॥ षिचींत् क्षरणे । सिक्थं मदनं पुलाकश्च ॥ टुओश्वि गतिवृद्ध्योः । शूथो यज्ञप्रदेशः ॥ हनंक् हिंसागत्योः । हथः पन्थाः कालश्च ॥ पां पाने । पीथं बालघृतपानमम्भो नवनीतं च । पीथो मकरो रविश्च ॥ गोपूर्वात् । गोपीथस्तीर्थविशेषो गोनिपानं जलद्रोणी कालविशेषश्च ॥ गैं शब्दे । अवगीथं यज्ञकर्मणि प्रातःशंसनम् । उद्गीथः शुनामूर्ध्वमुखानां विरावः सामगानं प्रथमोच्चारणं च ॥ २२७ ॥

न्युद्भ्यां शीङः ॥ २२८ ॥

नि-उद्पूर्वात् शीङ्क् स्वप्ने । इत्यस्मात्क्थः प्रत्ययो भवति ॥ निशीथोऽर्धरात्रो रात्रिः प्रदोषश्च ॥ उच्छीथः स्वप्नः टिट्टिभश्च ॥ २२८ ॥

अवभृनिर्ऋसमिण्भ्यः ॥ २२९ ॥

अवपूर्वात् बिभर्तेः । निस्पूर्वात् अर्तेः । सम्पूर्वात् एतेश्च क्थः प्रत्ययो भवति ॥ अवभृथो यज्ञावसानं यज्ञस्नानं च ॥ निर्ऋथो निकायः । निर्ऋथं स्थानम् । समिथः संगमो गोधूमपिष्टं च । समिथं समूहः ॥ २२९ ॥

सर्तेर्णित् ॥ २३० ॥

सृं गतौ । इत्यस्माण्णित्थः प्रत्ययो भवति ॥ सार्थः समूहः ॥ २३० ॥

पथयूथगूथकुथतिथनिथसूरथादयः ॥ २३१ ॥

एते थप्रत्ययान्ता निपात्यन्ते ॥ पलतेर्लो लुक् च । पथः पन्थाः ॥ यौतेर्गुवतेश्च दीर्घश्च । यूथः समूहः गूथममेध्यं विष्ठा च । किरतेः करोतेर्वा कुश्च । कुथः कुथा वास्तरणम् ॥ तनोतेस्तिष्ठतेर्वा तिश्च । तिथः कालः । तिम्यतेः । तिथः प्रावृट्कालः ॥ नयतेर्ह्रस्वश्च । निथः पूर्वक्षत्रियः कालश्च ॥ सुपूर्वात् रमेः सोर्दीर्घश्च किञ्च । सूरथो दान्तः ॥ आदिग्रहणात् निपूर्वात् रौतेर्दीर्घत्वं च । निरूथो दिक् । निरूथं पुण्यक्रमनियतम् ॥ एवं संगीथप्रगाथादयोऽपि भवन्ति ॥ २३१ ॥

भृशीशपिशमिगमिरमिवन्दिवञ्चिजीविप्राणिभ्योथः ॥ २३२ ॥

एभ्योथः प्रत्ययो भवति ॥ डुडुभृंग्क् पोषणे च । भरथः कैकेयीसुतोभि-र्लोकपालश्च ॥ शीङ्क् स्वप्ने । शयथोजगरः प्रदोषो मत्स्यो वराहश्च ॥ शपीं आ-क्रोशे । शपथः प्रत्ययकरणमाक्रोशश्च ॥ शमूच् उपशमे । शमथः समाधिराश्र-मपदं च ॥ गमॢं गतौ । गमथः पन्थाः पथिकश्च ॥ रमिं क्रीडायाम् । रमथः प्रहर्षः ॥ वदुङ् स्तुत्यभिवादनयोः । वन्दथः स्तोता स्तुत्यश्च ॥ वञ्चू गतौ । वञ्चथोध्वा कोकिलः काकदम्भश्च ॥ जीव प्राणधारणे । जीवथोर्येवाञ्जलमन्नं वायु-र्मयूरः कूर्मो धार्मिकश्च ॥ अनक् प्राणने । प्राणथो बलवानीश्वरः प्रजापतिश्च ॥२३२॥

उपसर्गाद्वसः ॥ २३३ ॥

उपसर्गात्परस्मात् वसं निवासे । इत्यस्मादथः प्रत्ययो भवति ॥ आव-सथो गृहम् ॥ उपवसथ उपवासः ॥ संवसथः संवासः ॥ सुवसथः सुवासः ॥ निवसथो निवासः ॥ २३३ ॥

विदिभिदिरुदिद्रुहिभ्यः कित् ॥ २३४ ॥

एभ्यः किदथः प्रत्ययो भवति ॥ विदक् ज्ञाने । विदथो ज्ञानी यज्ञोध्वर्युः संग्रामश्च ॥ भिदृंपी विदारणे । भिदथः शरः ॥ रुदृक् अश्रुविमोचने । रुदथो बालोसत्त्वः श्वा च ॥ द्रुहंच् जिघांसायाम् । द्रुहथः शत्रुः ॥ २३४ ॥

रोर्वा ॥ २३५ ॥

रुक् शब्दे । इत्यस्मादथः प्रत्ययो [भवति] स च किद्वा भवति ॥ रुवथः शकुनिः शिशुश्च ॥ रवथ आक्रन्दः शब्दकारश्च ॥ २३५ ॥

जॄवृभ्यामूथः ॥ २३६ ॥

आभ्यामूथः प्रत्ययो भवति ॥ जॄष्च् जरसि । जरूथः शरीरमग्रमांस-मग्निः संवत्सरो मार्गः कल्मषं च ॥ वृग्श् वरणे । वरूथो वर्म सेनाङ्गं बलसं-घातश्च ॥ २३६ ॥

शाशपिमनिकनिभ्यो दः ॥ २३७ ॥

एभ्यो दः प्रत्ययो भवति ॥ शोंच् तक्षणे । शादः कर्दमस्तरुणतृणं मृदु-र्गन्धः सुवर्णं च ॥ शपीं आक्रोशे । शब्दः श्रोत्रग्राह्योर्थः ॥ मनिंच् ज्ञाने । म-न्दोलसो बुद्धिहीनश्च ॥ कनै दीप्त्यादिषु । कन्दो मूलम् ॥ २३७ ॥

आपोप् च ॥ २३८ ॥

आप्लृट् व्याप्तौ । इत्यस्मादः प्रत्ययो भवत्यस्य च अप् इत्यादेशो भवति ॥ अब्दं वर्षम् ॥ २३८ ॥

गोः कित् ॥ २३९ ॥

गंत् पुरीषोत्सर्गे। इत्यस्मात्किदः प्रत्ययो भवति ॥ गुदमपानम् ॥ २३९॥

वृतुकुसुभ्यो नोन्तश्च ॥ २४० ॥

एभ्यः किदः प्रत्ययो [भवति] नकारश्चान्तो भवति ॥ वृगट् वरणे । वृन्दं समूहः ॥ तुंक् वृत्त्यादिषु । तुन्दं जठरम् ॥ कुंङ् शब्दे । कुन्दः पुष्पजातिः ॥ षुंगट् अभिषवे । सुन्दो दानवः ॥ २४० ॥

कुसेरिदेदौ ॥ २४१ ॥

कुसच् श्लेषे । इत्यस्मादिद ईद इत्येतौ कितौ प्रत्ययौ भवतः ॥ कुसिद-मृणम् ॥ कुसीदं वृद्धिजीविका ॥ २४१ ॥

इङ्ग्यर्विभ्यामुदः ॥ २४२ ॥

आभ्यामुदः प्रत्ययो भवति ॥ इगु गतौ । इङ्गुदो वृक्षजातिः ॥ अर्व गतौ । अर्बुदः पर्वतोक्षिव्याधिः संख्याविशेषश्च । निपूर्वात् । न्यर्बुदं संख्या-विशेषः ॥ २४२ ॥

ककेर्णिद्वा ॥ २४३ ॥

ककि लौल्ये । इत्यस्मादुदः प्रत्ययो [भवति] स च णिद्वा भवति ॥ काकुदं तालु ॥ ककुदं स्कन्धः ॥ २४३ ॥

कुमुदबुद्बुदादयः ॥ २४४ ॥

एत उदप्रत्ययान्ता निपात्यन्ते ॥ कमेः कुम् च । कुमुदं कैरवम् ॥ बुन्देः किद्वोन्तश्च । बुद्बुदो जलस्फोटः । बुद्बुदं नेत्रजो व्याधिः ॥ आदिग्रहणात् दुहींक् क्षर-णे । प्रत्ययादेरत्वे । दोहदोभिलाषविशेषः ॥ एवमन्येपि ॥ २४४ ॥

ककिमकिभ्यामन्दः ॥ २४५ ॥

आभ्यामन्दः प्रत्ययो भवति ॥ ककि लौल्ये ॥ मकिः सौत्रः । ककन्दो मकन्दश्च राजानौ । यकाभ्यां निर्वृत्ता काकन्दी माकन्दी च नगरी ॥ २४५ ॥

कल्यलिपुलिकुरिकुणिमणिभ्य इन्दक् ॥ २४६ ॥

एभ्य इन्दक् प्रत्ययो भवति ॥ कलि शब्दसंख्यानयोः । कलिन्दः पर्वतो

थतो यमुना प्रभवति ॥ अली भूषणादौ । अलिन्दः प्रघाणो भाजनस्थानं च ॥ पुल महत्त्वे । पुलिन्दः शबरः ॥ कुरत् शब्दे । कुरिन्दः सस्यमलहरणोपकरणं तेजनोपकरणं च ॥ कुणत् शब्दोपकरणयोः । कुणिन्दो म्लेच्छः शब्द उपकरणं च ॥ मण शब्दे । मणिन्दोऽश्वबन्धवः ॥ २४६ ॥

कुपेर्वे च वा ॥ २४७ ॥

कुपच् क्रोधे । इत्यस्मादिन्दक् प्रत्ययो भवति वश्चान्तादेशो वा भवति ॥ कुपिन्दः । कुविन्दस्तन्तुवायः ॥ २४७ ॥

पॄपलिभ्यां णित् ॥ २४८ ॥

आभ्यां णिदिन्दक् प्रत्ययो भवति ॥ पॄश् पालनपुरणयोः ॥ पल गतौ । पारिन्दः । पालिन्दः । द्वावपि वृक्षगाथकौ ॥ पारिन्दो मुख्यः पूज्यश्च ॥ पालिन्दो नृपतिः । रक्षकश्चेत्येके ॥ २४८ ॥

यमेरुन्दः ॥ २४९ ॥

यमूं उपरमे । इत्यस्मादुन्दः प्रत्ययो भवति ॥ यमुन्दः क्षत्रियविशेषः ॥ २४९ ॥

मुचेर्डुकुन्दकुकुन्दौ ॥ २५० ॥

मुच्लृंती मोक्षणे । इत्यस्माड्डिदुकुन्दः किदुकुन्दश्च प्रत्ययौ भवतः ॥ मुकुन्दो विष्णुः । मुचुकुन्दो राजा वृक्षविशेषश्च ॥ २५० ॥

स्कन्द्यमिभ्यां धः ॥ २५१ ॥

आभ्यां धः प्रत्ययो भवति ॥ स्कन्दृं गतिशोषणयोः । स्कन्धो बाहुमूर्धा ककुदं त्रिभागश्च । बाहुलकादस्य लुक् ॥ अम गतौ । अन्धश्चक्षुर्विकलः॥२५१॥

नेः स्यतेरधक् ॥ २५२ ॥

निपूर्वात् षोंच् अन्तकर्मणि । इत्यस्मादधक् प्रत्ययो भवति ॥ निषधः पर्वतः । निषधा जनपदः ॥ २५२ ॥

मङ्गेर्नलुक् च ॥ २५३ ॥

मगु गतौ । इत्यस्मादधक् प्रत्ययो [भवति] नकारस्य च लुग्भवति ॥ मगधा जनपदः ॥ २५३ ॥

आरगेर्वधः ॥ २५४॥

आङ्पूर्वात् रगे शङ्कायाम् । इत्यस्माद्वधः प्रत्ययो भवति ॥ आरग्वधो वृक्षजातिः ॥ २५४ ॥

परात् शृो डित् ॥ २५५ ॥

परपूर्वात् शृश् हिंसायाम् । इत्यस्माड्डिद्धः प्रत्ययो भवति ॥ परश्वध आयुधजातिः ॥ २५५ ॥

इषेरुधक् ॥ २५६ ॥

इषत् इच्छायाम्। इत्यस्मादुधक् प्रत्ययो भवति ॥ इषुधो यज्ञा [?]॥२५६॥

कोरन्धः ॥ २५७ ॥

कुंङ् शब्दे । इत्यस्मादन्धः प्रत्ययो भवति ॥ कबन्धश्छिन्नमूर्धा देहः ॥ २५७ ॥

ध्याधापन्यनिस्वदिस्वपिवस्यज्यतिसिविभ्यो नः ॥ २५८ ॥

एभ्यो नः प्रत्ययो भवति ॥ ध्यैंङ् वृद्धौ ॥ ध्यानः समुद्रश्चन्द्रश्च॥ डुधांग्क् धारणे च । धाना भृष्टो यवोङ्कुरश्च ॥ पनि स्तुतौ । पन्नं नीचैःकरणं सन्नं जिह्वा च ॥ अनक् प्राणने । अन्नं भक्तमाचारश्च ॥ ष्वदि आस्वादने । स्वन्नं रुचितम् ॥ ञिष्वपक् शये । स्वप्नो मनोविकारो निद्रा च ॥ वसं निवासे । वस्नं वासो मूल्यं मेढ्रमागमश्च ॥ अज क्षेपणे च । वेनः प्रजापतिर्ध्यानी राजावायुर्यज्ञः प्राज्ञो मूर्खश्च ॥ अत सातत्यगमने । अत्न आत्मा वायुर्मेघः प्रजापतिश्च ॥ षिवूच् उतौ । स्योनं सुखं तन्तुवायसूत्रसंतानः समुद्रः सूर्यो रश्मिरास्तरणं च ॥ २५८॥

षसेर्णित् ॥ २५९ ॥

षसक् स्वप्ने । इत्यस्माण्णिन्नः प्रत्ययो भवति ॥ सास्ना गोकण्ठावलम्बि चर्म निद्रा च ॥ २५९ ॥

रसेर्वा ॥ २६० ॥

रस शब्दे । इत्यस्मान्नः प्रत्ययो [भवति] स च णिद्वा भवति ॥ रास्ना धेनुरोषधिजातिश्च ॥ रस्नं द्रव्यजातिः। रस्ना जिह्वा। रस्नस्तुरङ्गो दण्डश्च ॥२६०॥

जीणृशीदीबुध्यविमीभ्यः कित् ॥ २६१ ॥

एभ्यः किन्नः प्रत्ययो भवति ॥ जिं अभिभवे । जिनोऽर्हन्बुद्धश्च ॥ इण्क् गतौ । इनः स्वामी संनिपात ईश्वरो राजा सूर्यश्च ॥ शीङ्क् स्वप्ने । शीनः पीलुः ॥ दींङ्च् क्षये । दीनः कृपणः खिन्नश्च ॥ बुधिंच् ज्ञाने । बुध्नो मूलं पृष्ठान्तो रुद्रश्च ॥ अव रक्षणादौ । ऊनमपरिपूर्णम् ॥ मींङ्च् हिंसायाम् । मीनो मत्स्यो राशिश्च ॥ २६१ ॥

सेर्वा ॥ २६२ ॥

षिंग्ट् बन्धने । इत्यस्मान्नः प्रत्ययो [ भवति ] स च किद्वा भवति ॥ सिनः कायो बलं बन्धश्च ॥ सेना चमूः ॥ २६२ ॥

सोरू च ॥ २६३ ॥

षुंग्ट् अभिषवे । इत्यस्मान्नः प्रत्ययो [भव] त्यूकारश्चान्तादेशो भवति ॥ सूना घातस्थानं दुहिता पुत्रः प्रकृतिराघाटस्थानं च ॥ २६३ ॥

रमेस्त् च ॥ २६४ ॥

रमिं क्रीडायाम् । इत्यस्मान्नः प्रत्ययो [ भवति ] तश्चान्तादेशो भवति ॥ रत्नं वज्रादिः ॥ २६४ ॥

क्रुशेर्वृद्धिश्च ॥ २६५ ॥

क्रुशं आह्वानरोदनयोः । इत्यस्मान्नः प्रत्ययो [भव] त्यस्य च वृद्धिर्भवति ॥ क्रौश्नः श्वापदः ॥ २६५ ॥

द्युसुनिभ्यो माङो डित् ॥ २६६ ॥

द्युसुनिपूर्वात् मांङ्क् मानशब्दयोः । इत्यस्माड्डिन्नः प्रत्ययो [भवति ॥] द्युम्नं द्रविणम् ॥ सुम्नं सुखम् ॥ निम्नं नतम् ॥ २६६ ॥

शीङः सन्वत् ॥ २६७ ॥

शीङ्क् स्वप्ने । इत्यस्माड्डिन्नः प्रत्ययो [ भवति ] स च सन्वद्भवति ॥ शिश्नं शेपः ॥ २६७ ॥

दिननग्नफेनचिह्नब्रध्नधेनस्तेनच्यौक्कादयः ॥ २६८ ॥

एते नप्रत्ययान्ता निपात्यन्ते ॥ दीव्यतेः किल्लुक् च । दिनमहः ॥ नञ्-पूर्वात् वसेर्गोन्तो धातोर्लुक् च । न वस्ते । नग्नोवसनः ॥ फणेः फलेः स्फायेर्वा फेभावश्च । फेनो बुद्बुदसंघातः ॥ चहेरिश्चोपान्त्यस्य । चिह्नमभिज्ञानम् ॥ बन्धे-र्ब्रध् च । ब्रध्नो रविः प्रजापतिर्ब्रह्मा स्वर्गः पृष्ठान्तश्च ॥ धयतेरेत्वं च । धेना सरस्वती माता च । धेनः समुद्रः । ईत्वं चेत्येके । धीना ॥ स्त्यायेस्ते च । स्तेन-श्चौरः ॥ च्यवतेर्वृद्धिः कोन्तश्च । च्यौक्नमक्षस्थानमनुजः क्षीणपुण्यश्च । च्यौक्नी कांस्यविपाकी ॥ आदिशब्दादन्येपि ॥ २६८ ॥

य्वसिरसिरुषिजिमस्जिदेविस्यन्दिवन्दिमन्दिमण्डिमदिदहि-वह्यादेरनः ॥ २६९ ॥

एभ्यो नः प्रत्ययो भवति ॥ युक् मिश्रणे । यवना जनपदः । यवनं मिश्र-

णम् ॥ असूच् क्षेपणे । असनो बीजकः ॥ रसण् आस्वादनस्नेहनयोः । रसना जिह्वा ॥ रुचि अभिप्रीत्यां च । रोचना गोपित्तम् । रोचनश्चन्द्रः । विपूर्वात् । विरोचनोऽग्निः सूर्य इन्दुर्दानवश्च ॥ जि अभिभवे । जयनमूर्णापटः ॥ टुमस्जोंत् शुद्धौ । मज्जनं स्नानं तोयं च ॥ देवृङ् देवने । देवनोऽक्षः कितवश्च ॥ स्यन्दौङ् स्रवणे । स्यन्दनो रथः ॥ चदु दीप्त्याह्लादयोः । चन्दनं गन्धद्रव्यम् ॥ मदुङ् स्तुत्यादौ । मन्दनं स्तोत्रम् ॥ मडु भूषायाम् । मण्डनमलंकारः ॥ मदैच् हर्षे । मदनो वृक्षः कामो मधूच्छिष्टं च ॥ दहं भस्मीकरणे । दहनोऽग्निः ॥ वहीं प्रापणे । वहनं नौः ॥ आदिग्रहणात् पचेः । पचनोऽग्निः ॥ पुनातेः । पवनो वायुः ॥ बिभर्तेः । भरणं साधनम् ॥ नयतेः । नयनं नेत्रम् ॥ द्युतेः । द्योतनः सूर्यः ॥ रचेः । रचना वैचित्र्यम् ॥ गृञ्जेः । गृञ्जनमभक्ष्यद्रव्यविशेषः ॥ प्रस्कन्दनः ॥ प्रपतनः ॥ इत्यादयोऽपि भवन्ति ॥ २६९ ॥

अशो रश्चादौ ॥ २७० ॥

अशौटि व्याप्तौ । इत्यस्मादनः प्रत्ययो [भवति] रेफश्चादौ भवति ॥ रशना मेखला ॥ रशिमेके प्रकृतिमुपदिशन्ति सा च राशि रशना रश्मि इत्यत्र प्रयुज्यत इत्याहुः ॥ २७० ॥

उन्देर्नलुक् च ॥ २७१ ॥

उन्दैप् क्लेदने । इत्यस्मादनः प्रत्ययो [ भवति ] नलोपश्च भवति ॥ ओदनो भक्तम् ॥ २७१ ॥

हनेर्घतजघौ च ॥ २७२ ॥

हनंक् हिंसागत्योः । इत्यस्मादनः प्रत्ययो [भवति] घतजघावित्यादेशौ चास्य भवतः । घतनो रक्तोपजीवी पापकर्मा निर्लज्जश्च ॥ जघनं श्रोणिः ॥ २७२ ॥

तुदादिवृजिरञ्जिनिधाभ्यः कित् ॥ २७३ ॥

एभ्यः किदनः प्रत्ययो भवति ॥ तुदींत् व्यथने । तुदनः ॥ क्षिपींत् प्रेरणे । क्षिपणः ॥ सुरत् ऐश्वर्यदीप्त्योः । सुरणः ॥ बुधिंच् ज्ञाने । बुधनः ॥ षिवूच् उतौ । सिवनः ॥ एषां यथासंभवं कारकमुच्यते । लबुङ् अवस्रंसने । लम्बनः शकुनिः ॥ वृजैकि वर्जने । वृजनमन्तरिक्षं निवारणं मण्डनं च ॥ रञ्जीं रागे । रजनं हरिद्रा । महारजनं कुसुम्भम् । रजनो रक्तविशेषः ॥ डुधांग्क् धारणे च । निधनमवसानम् ॥ २७३ ॥

सूधूभूभ्रस्जिभ्यो वा ॥ २७४ ॥

एभ्योनः प्रत्ययो भवति स च किद्वा [भवति]॥ षूत् प्रेरणे। सुवनोङ्कुर आदित्यः प्रादुर्भावश्च। सुवनं चन्द्रप्रभा। सवनं यज्ञः पूर्वाह्णापराह्णमध्याह्नकालश्च। त्रिषवणम्॥ धूत् विधूनने। धुवनो धूमो वायुरग्निश्च। धुवनमेधः। धवनम्॥ भू सत्तायाम्। भुवनं जगत्। भवनं गृहम्॥ भ्रस्जींत् पाके। भृज्जनमन्तरिक्षमम्बरीषः पाकश्च। भ्रज्जनः पावकः॥ २७४॥

विदनगगनगहनादयः ॥ २७५ ॥

एते किदनप्रत्ययान्ता निपात्यन्ते॥ विदु अवयवे। नलोपश्च। विदनो गोत्रकृत्॥ गमेर्ग् च। गगनमाकाशम्॥ गाहौङ् विलोडने। ह्रस्वश्च। गहनं दुर्गमम्॥ आदिग्रहणात् काञ्चनकाननादयो भवन्ति॥ २७५॥

संस्तुस्पृशिमन्थेरानः ॥ २७६ ॥

सम्पूर्वात् स्तोः स्पृशेश्च सम्पूर्वाभ्यां वा स्तुस्पृशिभ्यां मन्थेश्च आनः प्रत्ययो भवति॥ ष्टुंग्क् स्तुतौ। संस्तवानः सोमो होता महर्षिर्वाग्मी च॥ [स्पृशंत् संस्पर्शे] स्पर्शानो मनः। संस्पर्शानोमनोग्निश्च॥ मन्थश् विलोडने। मन्थानः खजकः॥२७६॥

युयुजियुधिबुधिमृशिदृशीशिभ्यः कित् ॥ २७७ ॥

एभ्यः किदानः प्रत्ययो भवति॥ युक् मिश्रणे। युवानस्तरुणः॥ युजूंपी योगे। युजानः सारथिः॥ युधिंच् संप्रहारे। युधानो रिपुः॥ बुधिंच् ज्ञाने। बुधान आचार्यः पण्डितो वा॥ मृशंत् आमर्शने। मृशानो विमर्शकः॥ दृशूं प्रेक्षणे। दृशानो लोकपालः॥ युजादिप्रसिद्धकर्त्रर्था एते॥ ईशिक् ऐश्वर्ये। ईशान ईश्वरः॥ २७७॥

मुमुचानयुयुधानशिश्विदानजुहुराणजिह्रियाणाः ॥ २७८ ॥

एते किदानप्रत्ययान्ता निपात्यन्ते॥ मुचेर्द्वित्वं च। मुमुचानो मेघः॥ एवं युधिंच् संप्रहारे। युयुधानः साहसिको राजा च कश्चित्॥ श्वितादृ वर्णे। अस्य दश्च। शिश्विदानो दुराचारो द्विजः॥ हुर्छा कौटिल्ये। अस्यान्तलुक् च। जुहुराणः कठिनहृदयः कुटिलोग्निरध्वर्युश्चन्द्रश्च॥ ह्रींक् लज्जायाम्। जिह्रियाणो नीतिमान्॥ सर्व एवैते मुच्यादिप्रसिद्धक्रियाकर्तृवचना इत्येके। अन्ये तु मुमुक्षादिसन्नन्तप्रकृतीनामेतन्निपातनं तेन सन्नन्तक्रियाकर्तृवचना इत्याहुः॥२७८॥

ऋञ्जिरञ्जिमन्दिसह्यर्हिभ्योसानः ॥ २७९ ॥

एभ्योसानः प्रत्ययो भवति ॥ ऋजुङ् भर्जने । ऋञ्जसानो महेन्द्रो मेघः श्मशानं च ॥ रञ्जीं रागे । रञ्जसानो धर्मो मेघश्च ॥ मदुङ् स्तुत्यादिषु । मन्दसानो हंसश्चन्द्रः सूर्यो जीवः स्वर्गोग्निश्च ॥ षहि मर्षणे । सहसानो हठो मयूरो यजमानः क्षमावांश्च ॥ अर्ह पूजायाम् । अर्हसानश्चन्द्रस्तुरंगमश्च ॥ २७९ ॥

रुहियजेः कित् ॥ २८० ॥

आभ्यां किदसानः प्रत्ययो भवति ॥ रुहं जन्मनि । रुहसानो विटपः ॥ यजीं देवपूजासंगतिकरणदानेषु । इजसानो धर्मः ॥ २८० ॥

वृधेर्वा ॥ २८१ ॥

वृधेरसानः प्रत्ययो [ भवति ] स च किद्वा भवति ॥ वृधूङ् वृद्धौ । वृधसानो गर्भः । वर्धसानो गिरिर्मृत्युर्गर्भः पुरुषश्च ॥ २८१ ॥

श्याकठिखलिनल्यविकुण्डिभ्य इनः ॥ २८२ ॥

एभ्य इनः प्रत्ययो भवति ॥ श्यैङ् गतौ । श्येनः पक्ष्यभिचारयज्ञश्च ॥ कठ कृच्छ्रजीवने । कठिनममृदु ॥ खल संचये च । खलिनमश्वमुखसंयमनम् ॥ णल गन्धे । नलिनं पद्मम् ॥ अव रक्षणादौ । अविनं जलं मृगो नाशोग्नी राजाध्वर्युर्विधानं गुप्तिश्च ॥ कुडुङ् दाहे । कुण्डिन ऋषिः । कुण्डिनं नगरम् ॥ २८२ ॥

वृजितुहिपुलिपुटिभ्यः कित् ॥ २८३ ॥

एभ्यः किदिनः प्रत्ययो भवति ॥ वृजैकि वर्जने । वृजिनं कुटिलं पापं च ॥ तुहू अर्दने । तुहिनं हिममन्धकारश्च ॥ पुल महत्त्वे ॥ पुटम् संश्लेषणे । पुलिनं पुटिनं च नदीतीरवालुकासंघातः ॥ २८३ ॥

विपिनाजिनादयः ॥ २८४ ॥

विपिनादयः शब्दाः किदिनप्रत्ययान्ता निपात्यन्ते ॥ डुवपीं बीजसंताने । टुवेपृङ् चलने । इत्यस्य वा । इत्वोपान्त्यस्य । विपिनं गहनमब्जं जलदुर्गं च ॥ अज क्षेपणे च । अस्य वीभावाभावश्च । अजिनं चर्म ॥ आदिग्रहणादन्येपि ॥२८४॥

महेर्णिद्वा ॥ २८५ ॥

मह पूजायाम् । इत्यस्मादिनः प्रत्ययो [ भवति ] स च णिद्वा भवति ॥ माहिनं राज्यं बलं च ॥ महिनं राज्यं शयनं च । महिनो माहात्म्यवान् ॥२८५।

खलिहिंसिभ्यामीनः ॥ २८६ ॥

आभ्यामीनः प्रत्ययो भवति ॥ खल संचये च । खलीनं कविकम् ॥ हिंसुप् हिंसायाम् । हिंसीनः श्वापदः ॥ २८६ ॥

पठेर्णित् ॥ २८७ ॥

पठ व्यक्तायां वाचि । इत्यस्माण्णिदीनः प्रत्ययो भवति ॥ पाठीनो मत्स्यः ॥ २८७ ॥

यम्यजिशक्यर्जिशीयाजितॄभ्य उनः ॥ २८८ ॥

एभ्य उनः प्रत्ययो भवति ॥ यमूं उपरमे । यमुना नदी ॥ अज क्षेपणे च । वयुनं विज्ञानमङ्कं च । वयुनो विद्वाञ्चन्द्रो यज्ञश्च ॥ शकॢट् शक्तौ । शकुनः पक्षी ॥ अर्ज अर्जने । अर्जुनः ककुभो वृक्षः पार्थः श्वेतवर्णः श्वेताश्वः कार्तवीर्यश्च । अर्जुनी गौः । अर्जुनं तृणं श्वेतसुवर्णं च ॥ शीङ्क् स्वप्ने । शयुनोऽजगरः। यजीं देवपूजादौ । यजुना क्रतुद्रव्यम् ॥ तॄ प्लवनतरणयोः । तरुणः समर्थो युवा वायुश्च । ऋफिडादित्वाल्लत्वे । तलुनः ॥ २८८ ॥

लषेः श् च ॥ २८९ ॥

लषी कान्तौ । इत्यस्मादुनः प्रत्ययो [ भवति ] तालव्यशकारश्चान्तादेशो भवति ॥ लशुनं कन्दजातिः ॥ २८९ ॥

पिशिमिथिक्षुधिभ्यः कित् ॥ २९० ॥

एभ्यः किदुनः प्रत्ययो भवति ॥ पिशत् अवयवे । पिशुनः खलः । पिशुनं मैत्रीभेदकं वचनम् । मिथृग् मेधाहिंसयोः । मिथुनं स्त्रीपुंसद्वन्द्वं राशिश्च ॥ क्षुधंच् बुभुक्षायाम् । क्षुधुनः कीटकः ॥ २९० ॥

फलेर्गोन्तश्च ॥ २९१ ॥

फल निष्पत्तौ । इत्यस्मादुनः प्रत्ययो [ भवति ] गश्चान्तो भवति ॥ फल्गुनोऽर्जुनः । फल्गुनी नक्षत्रम् ॥ २९१ ॥

वीपतिपटिभ्यस्तनः ॥ २९२ ॥

एभ्यस्तनः प्रत्ययो भवति ॥ वींक् प्रजननादौ । वेतनं भृतिः ॥ पत्लृ गतौ । पत्तनम् ॥ पट गतौ । पट्टनम् ॥ द्वावपि नगरविशेषौ ॥ पट्टनं शकटैर्गम्यं घोटकैर्नौभिरेव च । नौभिरेव तु यद्गम्यं पत्तनं तत्प्रचक्षते ॥ २९२ ॥

पृपूभ्यां कित् ॥ २९३ ॥

आभ्यां कित्तनः प्रत्ययो भवति ॥ पृंङ्त् व्यायामे । पृतना सेना ॥ पूङ्ग् पवने । पूतना राक्षसी ॥ २९३ ॥

कृत्यशौभ्यां स्नक् ॥ २९४ ॥

आभ्यां स्नक् प्रत्ययो भवति ॥ कृतैत् छेदने । कृत्स्नं सर्वम् ॥ अशौटि व्याप्तौ । अक्ष्णं नयनं व्याधी रज्जुस्तेजममखण्डं च ॥ २९४ ॥

अर्तेः शसानः ॥२९५ ॥

ऋंक् गतौ । इत्यस्मात्तालव्यादिः शसानः प्रत्ययो भवति ॥ अर्शसानः पन्था इषुरग्निश्च ॥ २९५ ॥

भापाचणिचमिविषिसृपॄतॄशीतल्यलिशमिरमिवपिभ्यः पः ॥ २९६ ॥

एभ्यः पः प्रत्ययो भवति ॥ भांक् दीप्तौ । भाप आदित्यो ज्येष्ठश्च भ्राता ॥ पांक् रक्षणे । पापं कल्मषम् । पापो घोरः ॥ चण हिंसादानयोश्च । चण्पा नगरी । चण्पो वृक्षः ॥ चमू अदने । चम्पा नगरी ॥ विषूंकी व्याप्तौ । वेष्पः परमात्मा स्वर्ग आकाशश्च । निपूर्वात् । निवेष्पोपां गर्भः कूपो वृक्षजातिरन्तरीक्षं च ॥ सृं गतौ । सर्पोऽहिः॥ पॄश् पालनपूरणयोः । पर्पः प्लवः शङ्कुः समुद्रः शस्त्रं च ॥ तॄ प्लवनतरणयोः । तर्प उडुपो नौश्च । शीङ्क् स्वप्ने । शेपः पुच्छम् ॥ तलण् प्रतिष्ठायाम् । तल्पं शयनीयमङ्कः दारा युद्धं च ॥ अली भूषणादौ । अल्पं स्तोकम् ॥ शमूच् उपशमे । शम्पा विद्युत्काञ्ची च । विपूर्वात् । विशम्पो दानवः ॥ रमिं क्रीडायाम् । रम्पा चर्मकारोपकरणम् ॥ डुवपीं बीजसंताने ॥ वप्पः पिता ॥ २९६ ॥

युसुकुरुतुच्युस्त्वादेरूच्च ॥ २९७ ॥

एभ्यः पः प्रत्ययो भवत्यूकारश्चान्तादेशो भवति ॥ युक् मिश्रणे । यूपो यज्ञपशुबन्धनकाष्ठम् ॥ षुंगट् अभिषवे । सूपो मुद्गादिभिन्नकुलः ॥ कुंक् शब्दे । कूपः प्रहिः ॥ रुक् शब्दे । रूपं श्वेतादि लावण्यं स्वभावश्च ॥ तुंक् वृत्त्यादौ । तूप आयतनविशेषः ॥ च्युंङ् गतौ । च्यूप आदित्यो वायुः संग्रामश्च ॥ ष्टुंग्क् स्तुतौ । स्तूपो बोधिसत्त्वभवनमुपायतनं च ॥ आदिशब्दादन्येपि ॥ २९७ ॥

कॄशॄसॄभ्य ऊर् चान्तस्य ॥ २९८ ॥

एभ्यः पः प्रत्ययो [भव]त्यन्तस्य च ऊर् भवति ॥ कॄत् विक्षेपे । कूर्पं भ्रूमध्यम् ॥ शॄश् हिंसायाम् । शूर्पो धान्यादिनिष्पवनभाण्डं संख्या च ॥ सृं गतौ । सूर्पो भुजंगमो मत्स्यजातिश्च ॥ २९८ ॥

शदिबाधिखनिहनेः ष् च ॥ २९९ ॥

एभ्यः पः प्रत्ययो [भवति] षश्चान्तादेशो भवति ॥ शद्लृ शातने । शष्प

बालतृणम् । शष हिंसायाम् । ह्रस्वस्य वा रूपम् ॥ बाधृङ् रोटने । बाष्पोश्रु धूमाभासं च मुखपानीयादौ ॥ खनूग् अवदारणे । खष्पो बलात्कारो दुर्मेधाः कूपश्च । खष्पं खलीनं जनपदविशेषोद्धारश्च ॥ हनंक् हिंसागत्योः । हष्पः प्रावरणजातिः ॥ २९९ ॥

पम्पाशिल्पादयः ॥ ३०० ॥

पम्पादयः शब्दाः पप्रत्ययान्ता निपात्यन्ते ॥ पांक् रक्षणे । मोन्तो ह्रस्वश्च । पम्पा पुष्करिणी ॥ शीलयतेः शलतेः शेतेर्वा शिलादेशश्च । शिल्पं विज्ञानम् ॥ आदिशब्दादन्येपि ॥ ३०० ॥

क्षुचुपिपूभ्यः कित् ॥ ३०१ ॥

एभ्यः कित्पः प्रत्ययो भवति ॥ टुक्षुक् शब्दे । क्षुपो गुच्छः ॥ चुप मन्दायाम् । चुप्पं मन्दगमनम् ॥ पूग्श् पवने । पूपः पिष्टमयः ॥ ३०१ ॥

नियो वा ॥ ३०२ ॥

णींग् प्रापणे । इत्यस्मात्पः प्रत्ययो [भवति] स च किद्वा भवति ॥ नीपो वृक्षविशेषः ॥ नेपो नयः पुरोहितो वृक्षो भृतकश्च । नेपमुदकं यानं च ॥ ३०२ ॥

उभ्यवेर्लुक् च ॥ ३०३ ॥

आभ्यां कित्पः प्रत्ययो भवति लुक् चान्तस्य भवति । उभत् पूरणे । अव रक्षणादौ । उप । अप चाव्यये ॥ ३०३ ॥

दलिवलितलिखजिध्वजिकचिभ्योपः ॥ ३०४ ॥

एभ्योपः प्रत्ययो भवति ॥ दल विशरणे । दलपः प्रहरणं रणमुखं विदलं दलविशेषश्च । दलपं व्रणमुखत्राणम् ॥ वलि संवरणे । वलपः कर्णिका ॥ तलण् प्रतिष्ठायाम् । तलपो हस्तप्रहारः ॥ खज मन्थे । खजपो मन्थः । खजपं दधिघृतमुदकं च ॥ ध्वज गतौ । ध्वजपो ध्वजः ॥ कचि बन्धने । कचपः शाकपर्णी बन्धश्च ॥ ३०४ ॥

भुजिकुतिकुटिविटिकुणिकुष्युषिभ्यः कित् ॥ ३०५ ॥

एभ्यः किदपः प्रत्ययो भवति ॥ भुजंप् पालनाभ्यवहारयोः । भुजपो राजा यजमानपालमाहामेध ॥ कुतिः सौत्रः । कुतपश्छागलोम्नां कम्बल आस्तरणं भाद्रकालश्च । कुटत् कौटिल्ये । कुटपः प्रस्थचतुर्भागो नीडं च शकुनीनाम् ॥

विट शब्दे । विटपः शाखा ॥ कुणत् शब्दोपकरणयोः। कुणपो मृतकं कुथितं शब्दार्थसाकल्यं च ॥ कुषश् निष्कर्षे । कुषपो विन्ध्यः संदंशश्च ॥ उषू दाहे । उषपो दाहः सूर्यो वह्निश्च ॥ ३०५ ॥

शंसेः श इच्चातः ॥ ३०६ ॥

शंसु स्तुतौ च । इत्यस्मादपः प्रत्ययो [ भवति ] तालव्यशकारान्तादेशोऽकारस्य च इकारो भवति ॥ शिंशपा वृक्षविशेषः ॥ ३०६ ॥

विष्टपोलपवातपादयः ॥ ३०७ ॥

विष्टपादयः शब्दाः किदपप्रत्ययान्ता निपात्यन्ते ॥ विषेस्तोऽन्तश्च । विष्टपं जगत्सुकृतिनां स्थानं च ॥ वलेरुल् च । उलपं पर्वततृणं पङ्कजं जलं च । उलप ऋषिः ॥ वातेस्तोऽन्तश्च । वातप ऋषिः ॥ आदिग्रहणात् खरपादयोऽपि भवन्ति ॥ ३०७ ॥

कलेरापः ॥ ३०८ ॥

कलि शब्दसंख्यानयोः । इत्यस्मादापः प्रत्ययो भवति ॥ कलापः काञ्ची समूहः शिखण्डश्च ॥ ३०८ ॥

विशेरीपक् ॥ ३०९ ॥

विशंत् प्रवेशने । इत्यस्मादिपक् प्रत्ययो भवति ॥ विशिपो राशिः । विशिपं तृणं वेश्मासनं पद्मं च ॥ ३०९ ॥

दलेरीपो दिल् च ॥ ३१० ॥

दल विशरणे । इत्यस्मादीपः प्रत्ययो भवति दिल् चास्यादेशो भवति ॥ दिलीपो राजा ॥ ३१० ॥

उडेरुपक् ॥ ३११ ॥

उड् संघाते । इति सौत्रादुपक् प्रत्ययो भवति ॥ उडुपः प्लवः । जपादित्वाद्ध्रस्वे । उडुवः ॥ ३११ ॥

अशः ऊपः पश्च ॥ ३१२ ॥

अशौटि व्याप्तौ । इत्यस्मादूपः प्रत्ययो [ भवति ] पश्चान्तादेशो भवति ॥ अपूपः पक्वान्नविशेषः ॥ ३१२ ॥

सर्तेः षपः ॥ ३१३ ॥

सृं गतौ । इत्यस्मात् षपः प्रत्ययो भवति ॥ सर्षपो रक्षोघ्नं द्रव्यं शाकं च ॥ ३१३ ॥

रीशीभ्यां फः ॥ ३१४ ॥

आभ्यां फः प्रत्ययो भवति ॥ रींङ्च् स्रवणे । रेफः कुत्सितः ॥ शीङ्क् स्वप्ने । शेफो मेण्ढ्रः ॥ ३१४ ॥

कलिगलेरस्योच्च ॥ ३१५ ॥

आभ्यां फः प्रत्ययो [ भव]त्यस्य च उकारो भवति ॥ कलि शब्दसंख्यानयोः । गल अदने । कुल्फो गुल्फश्च जङ्घांह्रिसंधिः । गुल्फः पादोपरिग्रन्थिः ॥ ३१५ ॥

शफकफशिफाशोफादयः ॥ ३१६ ॥

शफादयः शब्दाः फप्रत्ययान्ता निपात्यन्ते ॥ शयतेः कायतेश्च ह्रस्वश्च । शफः खुरः प्रियंवदश्च ॥ कफः श्लेष्मा ॥ शयतेरित्वमोत्वं च । शिफा वृक्षजटा । शोफः श्वयथुः खुरश्च ॥ आदिशब्दात् रिफानफाद्गुनफादयो भवन्ति ॥ ३१६ ॥

वलिनितनिभ्यां बः ॥ ३१७ ॥

वलि संवरणे । निपूर्वाच्च तनूयी विस्तारे । इत्याभ्यां बः प्रत्ययो भवति ॥ वल्बो वृक्षः ॥ नितम्बः श्रोणिः पर्वतैकदेशो नटश्च ॥ ३१७ ॥

शम्यमेर्णिद्वा ॥ ३१८ ॥

आभ्यां बः प्रत्ययो [ भवति ] स च णिद्वा भवति ॥ शमूच् उपशमे । शम्बो वज्रः कर्षणविशेषो वेणुदण्डस्तोत्रमरित्रं च ॥ शम्बशाम्बौ जाम्बवतेयौ ॥ अम गतौ । अम्बा माता । आम्बोपह्नवः ॥ ३१८ ॥

शल्यलेरुच्चातः ॥ ३१९ ॥

आभ्यां बः प्रत्ययो [भव]त्यकारस्य च उकारो भवति ॥ पल फल शल गतौ । शुल्वं ताम्रम् ॥ अली भूषणादौ । उल्वं रजतं गर्भवेष्टनम् ॥ शुल्वं बभ्रुस्तरक्षुश्च ॥ ३१९ ॥

तुम्बस्तम्बादयः ॥ ३२० ॥

तुम्बादयः शब्दा बप्रत्ययान्ता निपात्यन्ते ॥ ताम्यतेरत उत्वं च । तुम्बमलाबु चक्राङ्गं च ॥ स्तम्भेर्लुक् च । स्तम्बस्तृणं विटपः संघातोऽङ्कुरसमुदायः स्तबकः पुष्पापीडश्च ॥ आदिशब्दात् कुशाम्बादयो भवन्ति ॥ ३२० ॥

कृकडिकटिवटेरम्बः ॥ ३२१ ॥

एभ्योऽम्बः प्रत्ययो भवति ॥ डुकृंग् करणे । करम्बो दध्योदनो दधिसक्तवः पुष्पं च । कडत् मदे । कडम्बो जातिविशेषो जनपदविशेषश्च ॥ कटे वर्षा-

वरणयोः । कटम्बः पक्षाविशेषो वादित्रं च ॥ कडम्बकटम्बौ वृक्षौ च ॥ वट वेष्टने । वटम्बः शैलस्तृणपुञ्जश्च ॥ ३२१ ॥

कदेर्णिद्वा ॥ ३२२ ॥

कद वैक्लव्ये । इति सौत्रादम्बः प्रत्ययो [भवति] स च णिद्वा भवति ॥ कादम्बो हंसः ॥ कदम्बो वृक्षजातिः ॥ ३२२ ॥

शिलविलादेः कित् ॥ ३२३ ॥

शिलादिभ्यः किदम्बः प्रत्ययो भवति ॥ शिलत् उञ्छे । शिलम्ब ऋषिस्तन्तुवायश्च ॥ विलत् वरणे । विलम्बो वेषविशेषो रङ्गावसरश्च ॥ आदिग्रहणादन्येपि ॥ ३२३ ॥

हिण्डिविलेः किम्बो नलुक् च ॥ ३२४ ॥

आभ्यां किदिम्बः प्रत्ययो [भवति] नस्य च लुग्भवति ॥ हिडुङ् गतौ च । विलत् वरणे । हिडिम्बो विलिम्बश्च राक्षसौ ॥ ३२४ ॥

डीनीबन्धिशृधिचलिभ्यो डिम्बः ॥ ३२५ ॥

एभ्यो डिदिम्बः प्रत्ययो भवति ॥ डीङ् विहायसां गतौ । डिम्बो राजोपद्रवः ॥ णींग् प्रापणे । निम्बो वृक्षविशेषः ॥ बन्धंश् बन्धने । बिम्बं प्रतिच्छन्दको देहश्च । बिम्बी वल्लिजातिः ॥ शृधूङ् शब्दकुत्सायाम् । शिम्बो मृगजातिः । शिम्बी निष्पाववल्ली च ॥ चल कम्पने । चिम्बा यवागूजातिः ॥ ३२५ ॥

कुटयुन्दिचुरितुरिपुरिमुरिकुरिभ्यः कुम्बः ॥ ३२६ ॥

एभ्यः किदुम्बः प्रत्ययो भवति ॥ कुटत् कौटिल्ये । कुटुम्बं दारादयः ॥ उदैप् क्लेदने । उदुम्बः समुद्रः ॥ चुरण् स्तेये । तुर त्वरणे सौत्रः । तुरुम्बस्तुरुम्बश्च गहनम् ॥ पुरत् अग्रगमने । पुरुम्ब आहारः ॥ मुरत् संवेष्टने । मुरुम्बो मृद्यमानपाषाणचूर्णम् ॥ कुरत् शब्दे । कुरुम्बोकुरः । निपूर्वात् । निकुरुम्बो राशिः ॥ ३२६ ॥

गृदृरमिहनिजन्यर्तिदलिभ्यो भः ॥ ३२७ ॥

एभ्यो भः प्रत्ययो भवति ॥ गृत् निगरणे । गर्भो जठरस्थप्राणी ॥ दृश् विदारणे । दर्भः कुशः ॥ रमि क्रीडायाम् । रम्भाप्सराः कदली च ॥ हनंक् हिंसागत्योः । हम्भा गोधेनुनादः ॥ जनैचि प्रादुर्भावे । जम्भो दानवो दन्तश्च । जम्भा मुखविदारणम् ॥ ऋंक् गतौ । अर्भः शिशुः ॥ दलण् विदारणे । दल्भ ऋषिर्वल्कलं विदारणं च ॥ ३२७ ॥

इणः कित् ॥ ३२८ ॥

इणक् गतौ । इत्यस्मात्किद्भः प्रत्ययो भवति ॥ इभो हस्ती ॥ ३२८ ॥

कृशृगृशलिकलिकडिगर्दिरासिरमिवडिवल्लेरभः ॥ ३२९ ॥

एभ्योभः प्रत्ययो भवति ॥ कृत् विक्षेपे । करभस्त्रिवर्ष उष्ट्रः ॥ शृश् हिंसायाम् । शरभः श्वापदविशेषः ॥ गृत् निगरणे । गरभ उदरस्थो जन्तुः ॥ पल फल शल गतौ । शलभः पतंगः ॥ कलि शब्दसंख्यानयोः । कलभो हस्ती यौवनाभिमुखः ॥ कडत् मदे । कडभो हस्तिपोतकः ॥ गर्द शब्दे । गर्दभः खरः ॥ रासृङ् शब्दे । रासभः स एव ॥ रमिं क्रीडायाम् । रमभः प्रहर्षः ॥ वडः सौत्रः । वडभी वेश्माग्रभूमिका । ऋफिडादित्वाल्लत्वे । वलभी ॥ वल्लि संवरणे । वल्लभः स्वामी दयितश्च ॥ ३२९ ॥

सनेर्डित् ॥ ३३० ॥

षन भक्तौ । इत्यस्माड्डिदभः प्रत्ययो भवति ॥ सभा परिषच्छाला च ॥ ३३० ॥

ऋषिवृषिलुसिभ्यः कित् ॥ ३३१ ॥

एभ्यः किदभः प्रत्ययो भवति ॥ ऋषैत् गतौ । वृषू सेचने । ऋषभो वृषभश्च पुङ्गवो भगवांश्चादितीर्थकरः । ऋषभो वायुः ॥ लुसिः सौत्रः । लुसभो हिंस्रो मत्तहस्ती वनं च ॥ ३३१ ॥

सिटिकिभ्यामिभः सैरटिट्टौ च ॥ ३३२ ॥

आभ्यामिभः प्रत्ययो [ भवति ] दन्त्यादिः सैरः टिट्टश्चादेशौ यथासंख्यं भवतः ॥ षिग्ट् बन्धने । सैरिभो महिषः ॥ टिकि गतौ । टिट्टिभः पक्षी ॥ ३३२ ॥

ककेरुभः ॥ ३३३ ॥

ककि लौल्ये । इत्यस्मादुभः प्रत्ययो भवति ॥ ककुभोर्जुनः ॥ ३३३ ॥

कुकेः कोन्तश्च ॥ ३३४ ॥

कुकि आदाने । इत्यस्मादुभः प्रत्ययो [ भवति ] ककारश्चान्तो भवति ॥ कुकुभः पक्षिविशेषः ॥ ३३४ ॥

दमो दुण्ड् च ॥ ३३५ ॥

दमूच् उपशमे । इत्यस्मादुभः प्रत्ययो [ भव ] त्यस्य च दन्त्यादिडवर्गतृतीयान्तो दुण्ड् इत्यादेशो भवति ॥ दुण्डुभो निर्विषाहिः ॥ ३३५ ॥

कृकलेरम्भः ॥ ३३६ ॥

आभ्यामम्भः प्रत्ययो भवति ॥ डुकृंग् करणे । करम्भो दधिसक्तवः ॥ कलि शब्दसंख्यानयोः । कलम्भ ऋषिः ॥ ३३६ ॥

काकुसिभ्यां कुम्भः ॥ ३३७ ॥

आभ्यां किदुम्भः प्रत्ययो भवति ॥ कैं शब्दे । कुम्भो घटो राशिश्च ॥ कुसच् श्लेषणे । कुसुम्भो महारजनम् ॥ ३३७ ॥

अर्तीरिस्तुसुहुसृघृधृशृक्षियक्षिभावाव्याधापाया-
वलिपदिनीभ्यो मः ॥ ३३८ ॥

एभ्यो मः प्रत्ययो भवति ॥ ऋंक् गतौ । अर्मोऽक्षिरोगो ग्रामः स्थलं च ॥ ईरिक् गतिकम्पनयोः । ईर्म व्रणः ॥ ष्टुंग्क् स्तुतौ । स्तोमः समूहो यज्ञः स्तोत्रं च ॥ षुंग्ट् अभिषवे । सोमश्चन्द्रो वल्ली च ॥ हुंक् दानादनयोः । होम आहुतिः ॥ सृं गतौ । सर्मो नदः कालश्च । सर्म स्नानं सुखं च ॥ घृं सेचने । घर्मो ग्रीष्मः ॥ धृंङ्त् स्थाने । धर्म उत्तमक्षमादिर्न्यायश्च ॥ शॄश् हिंसायाम् । शर्म सुखम् ॥ क्षित् निवासगत्योः । क्षेमं कल्याणम् ॥ यक्षिण् पूजायाम् । यक्ष्मो व्याधिः ॥ भांक् दीप्तौ । भामः क्रोधः । भामा स्त्री ॥ वांक् गतिगन्धनयोः । वामः प्रतिकूलः सव्यश्च ॥ व्येंग् संवरणे । व्यामो वक्षो भुजायतिः ॥ डुधांग्क् धारणे च । धाम निलयस्तेजश्च ॥ पां पाने । पामा कच्छूः ॥ यांक् प्रापणे । यामः प्रहरः ॥ वलि संवरणे । वल्मो ग्रन्थिः ॥ पदिंच् गतौ । पद्मं कमलम् ॥ णींग् प्रापणे । नेमोऽर्धः समीपश्च ॥ ३३८ ॥

ग्रसिह्वाभ्यां ग्राजिह्मौ च ॥ ३३९ ॥

आभ्यां मः प्रत्ययो [भव]त्यनयोश्च ग्राजिह्मावित्यादेशौ यथासंख्यं भवतः॥ ग्रामः समूहादिः ॥ जिह्मः कुटिलः ॥ ३३९ ॥

विलिभिलिसिधीन्धिधूसूश्याध्यारुसिविशुषिमुषीषिसुहियु-
धिदसिभ्यः कित् ॥ ३४० ॥

एभ्यः किन्मः प्रत्ययो भवति ॥ विलत् वरणे । विल्मं प्रकाशम् ॥ भिलिः सौत्रः । भिल्मं भास्वरम् ॥ षिधू गत्याम् । सिध्मं त्वग्रोगः ॥ ञिइन्धैपि दीप्तौ । इध्ममिन्धनम् ॥ धूग्श् कम्पने । धूमोऽग्निकेतुः ॥ षूङौच् प्राणिप्रसवे । सूमः कालः अयश्च रविश्च । सूममन्तरीक्षम् ॥ श्यैङ् गतौ । श्यामो वर्णः । श्यामं

नभः । श्यामा रात्रिरोषधिश्च ॥ ध्यैं चिन्तायाम् । ध्यामोऽव्यक्तवर्णः ॥ रुक् शब्दे । रुमा लवणभूमिः ॥ षिवूच् उतौ । स्यूमो रश्मिर्दीर्घः सूत्रतन्तुश्च । स्यूमं जलम् ॥ शुषंच् शोषणे । शुष्मं बलं जलं संयोगश्च ॥ मुषश् स्तेये । मुष्मो मूषिकः ॥ ईष उञ्छे । ईष्मो वसन्तो बाणो वातश्च ॥ षुहच् शक्तौ । सुह्मा जनपदः । सुह्मो राजा ॥ युधिंच् संप्रहारे । युध्मः शरत्कालः शूरः शत्रुः संग्रामश्च ॥ दसूच् उपक्षये । दस्मो हीनो वह्निर्यजश्च ॥ ३४० ॥

## क्षुहिभ्यां वा ॥ ३४१ ॥

आभ्यां मः प्रत्ययो [ भवति ] स च किद्वा भवति ॥ टुक्षुक् शब्दे । क्षुमातसी । क्षोमं वस्त्रम् ॥ हिंट् गतिवृद्ध्योः । हिमं तुषारः । हेमं सुवर्णम् ॥ ३४१ ॥

## अवेर्हस्वश्च वा ॥ ३४२ ॥

अव रक्षणादौ । इत्यस्मात्किन्मः प्रत्ययो [ भव ] त्यूटो ह्रस्वश्च वा भवति ॥ उमा गौर्यतसी कीर्तिश्च ॥ ऊममूनमाकाशं नगरं च ॥ ३४२ ॥

## सेरी च वा ॥ ३४३ ॥

षिंग्ट् बन्धने । इत्यस्मात्किन्मः प्रत्ययो [ भवति ] ईकारश्चान्तादेशो वा भवति ॥ सीमो ग्रामगोचरभूमिः क्षेत्रमर्यादा इयश्च । सिमः स एव सर्वार्थश्च ॥ ३४३ ॥

## भियः षोन्तश्च वा ॥ ३४४ ॥

ञिभीक् भये । इत्यस्मात्किन्मः प्रत्ययो [ भवति ] षश्चान्तादेशो वा भवति ॥ बिभेत्यस्मादिति भीष्मो भयानकः । भीमः स एव ॥ ३४४ ॥

## तिजियुजेर्ग् च ॥ ३४५ ॥

आभ्यां किन्मः प्रत्ययो [ भवति ] गश्चान्तादेशो भवति ॥ तिजि क्षमानिशानयोः । तिग्मं तीक्ष्णं दीप्तं तेजश्च ॥ युजंपी योगे । युग्मं युगलम् ॥ ३४५ ॥

## रुक्मग्रीष्मकुर्मसूर्मजाल्मगुल्मग्रामपरिस्तोमसूक्ष्मादयः ॥ ३४६ ॥

एते किन्मप्रत्ययान्ता निपात्यन्ते ॥ रोचतेः क् च । रुक्मं सुवर्णं रूप्यं च ॥ ग्रसेर्गोष् च । ग्रीष्म ऋतुः ॥ कुरुतेर्दीर्घश्च । कूर्मः कच्छपः ॥ षूत् प्रेरणे । इत्यस्य रोन्तश्च । सूर्मी लोहप्रतिमा चुल्लिश्च ॥ जल घात्ये । दीर्घश्च । जाल्मो निकृष्टः ॥ गुपच् व्याकुलत्वे । लश्च । गुल्मो व्याधिस्तरुसमूहो वनस्पतिः सेनाङ्गं च ।

गुल्ममायस्थानम् ॥ जिघ्रतेरौत्वं च। घ्रोमो यज्ञाङ्गलक्षणः सोमः ॥ परिपूर्वात् स्तौतेः षत्वाभावो गुणश्च। परिस्तोमो यज्ञविशेषः ॥ सूचण् पैशुन्ये। ऊत्वं षोन्तश्च। सूक्ष्मो निपुणः। सूक्ष्ममणु ॥ आदिग्रहणात् क्ष्मादयो भवन्ति ॥ ३४६ ॥

सृपॄप्रथिचरिकाडिकर्देरमः ॥ ३४७ ॥

एभ्योमः प्रत्ययो भवति ॥ सृं गतौ। सरमा देवशुनी ॥ पॄश् पालनपूरणयोः। परम उत्कृष्टः ॥ प्रथिष् प्रख्याने। प्रथम आद्यः ॥ चर भक्षणे। चरमः पश्चिमः ॥ कडत् मदे। कडमः शालिः। ऋफिडादित्वाल्लत्वे। कलमः स एव ॥ कर्द कुत्सिते शब्दे। कर्दमः पङ्कः ॥ ३४७ ॥

अवेर्ध् च वा ॥ ३४८ ॥

अव रक्षणादौ। इत्यस्मादमः प्रत्ययो [ भवति ] धश्चान्तादेशो वा भवति। अधमोवमश्च हीनः ॥ ३४८ ॥

कुट्टिवेष्टिपूरिपिषिसिचिगण्यर्पिवृमहिभ्य इमः ॥ ३४९ ॥

एभ्य इमः प्रत्ययो भवति ॥ कुट्टण् कुत्सने च। कुट्टिमं संस्कृतभूमितलम् ॥ वेष्टि वेष्टने। वेष्टिमं पुष्पबन्धविशेषो भक्ष्यविशेषश्च ॥ पूरैचि आप्यायने। पूरिमं मालाबन्धविशेषो भक्ष्यविशेषश्च ॥ पिषूंप् संचूर्णने। पेषिमं भक्ष्यविशेषः ॥ षिचींत् क्षरणे। सेचिमं मालाविशेषः ॥ गणण् संख्याने। गणिमं गणितम् ॥ ऋंक् गतौ। णौ पौ। अर्पिमं बालवत्साया दुग्धम् ॥ वृग्ट् वरणे। वरिमं तुलोन्मेयम् ॥ मह पूजायाम्। महिमं पूजनीयम् ॥ ३४९ ॥

वयिमखनिमादयः ॥ ३५० ॥

वयिमादयः शब्दा इमप्रत्ययान्ता निपात्यन्ते ॥ वेंग् तन्तुसंताने। वयादेशश्च। वयिमं माल्यं कन्दुकस्तन्तुवायदण्डश्च ॥ खनूग् अवदारणे। नश्च। खन्निमं मणिलोहविद्धं घृतविहीनं च ॥ आदिशब्दादन्येपि ॥ ३५० ॥

उद्वटिकुल्यलिकुथिकुरिकुटिकुडिकुसिभ्यः कुमः ॥ ३५१ ॥

उत्पूर्वात् वटेः कुल्यादिभ्यश्च किदुमः प्रत्ययो भवति ॥ वट वेष्टने। उद्वटुमः परिक्षेपः ॥ कुल बन्धुसंस्त्यानयोः ॥ कुलुम उत्सवः ॥ अली भूषणादौ। अलुमः प्रसाधनं नापितोग्निश्च ॥ कुथच् पूतिभावे। कुथुम ऋषिः। कुथुमं मृगाजिनम् ॥ कुरत् शब्दे। कुरुमः कारुभाजनं च ॥ कुटत् कौटिल्ये। कुटुमः प्रेष्यः ॥ कुडत् बाल्ये च। कुडुमा भूमिः ॥ कुसच् श्लेषे। कुसुमं पुष्पम् ॥ ३५१ ॥

कुन्दुमलिन्दुमकुङ्कुमविद्रुमपद्रुमादयः ॥ ३५२ ॥

एते कुमप्रत्ययान्ता निपात्यन्ते ॥ कुकि आदाने । स्वराञ्जो दश्च । कुन्दुमो निचयो गन्धद्रव्यं च ॥ लींङ्च् श्लेषणे । लिन्दभावश्च । लिन्दुमो गन्धद्रव्यम् ॥ कुकेः स्वराञ्जोन्तश्च । कुङ्कुमं घुसृणम् ॥ विद्लृंती लाभे । रोन्तश्च । विद्रुमः प्रवालः ॥ पदेष्टोन्तश्च । पद्रुमं नगरम् ॥ आदेरन्येपि ॥ ३५२ ॥

कुथिगुधेरूमः ॥ ३५३ ॥

आभ्यामूमः प्रत्ययो भवति ॥ कुथच् पूतिभावे । कोथूमश्चरणकृदृषिः ॥ गुधच् परिवेष्टने । गोधूमो धान्यविशेषः ॥ ३५३ ॥

विहाविशापचिभिद्यादेः केलिमः ॥ ३५४ ॥

विपूर्वाभ्याम् ओहांक् त्यागे । शोंच् तक्षणे । इत्येताभ्यां पच्यादिभ्यश्च किदेलिमः प्रत्ययो भवति ॥ विहीयते त्यज्यतेशुचि शरीरमास्मिन्निति विहेलिमः स्वर्गः ॥ विशयति तनूभवति मासि मासि कलाभिर्हीयमान इति विशेलिमश्चन्द्रः स्वर्गश्च ॥ डुपचींष् पाके । पचत्यसावन्नमिति पचेलिमोग्निरादित्योश्वश्च ॥ भिदूंपी विदारणे । भिदेलिमस्तस्करः ॥ आदिशब्दात् दृशूं प्रेक्षणे । दृशेलिमम् ॥ अदं प्सांक् भक्षणे । अदेलिमम् ॥ हनंक् हिंसागत्योः । घ्नेलिमम् ॥ डुयाचृग् याच्ञायाम् । याचेलिमम् ॥ पांक् रक्षणे । पेलिमम् ॥ डुकृंग् करणे । क्रेलिमम् ॥ इत्यादयोपि भवन्ति ॥ ३५४ ॥

दो डिमः ॥ ३५५ ॥

दाम् दाने । इत्यस्माड्डिमः प्रत्ययो भवति ॥ दाडिमो दाडिमी वा वृक्षजातिः ॥ ३५५ ॥

डिमेः कित् ॥ ३५६ ॥

डिमिः सौत्रः । तस्मात्किड्डिमः प्रत्ययो भवति ॥ डिण्डिमो वाद्यविशेषः ॥ ३५६ ॥

स्थाछामासासूमन्यनिकनिषसिपलिकालिशलिशकीर्ष्यसहिबन्धिभ्यो यः ॥ ३५७ ॥

एभ्यो यः प्रत्ययो भवति ॥ ष्ठां गतिनिवृत्तौ । स्थायः स्थानम् । स्थाया भूमिः ॥ दों छोंच् छेदने । छाया तमः प्रतिरूपं कान्तिश्च ॥ मांक् माने । माया छद्म दिव्यानुभावदर्शनं च ॥ षोंच् अन्तकर्मणि । सायं दिनावसानम् । षूत् प्रेरणे ।

सव्यो वामो दक्षिणश्च ॥ मनिंच् ज्ञाने । मन्या धमनिः ॥ अनक् प्राणने । अन्यः परः ॥ कनै दीप्त्यादिषु । कन्या कुमारी ॥ षसक् स्वप्ने । सस्यं क्षेत्रस्थं गोधूमादि ॥ पल्ल गतौ । पल्यं कटकुसूलः ॥ कलि शब्दसंख्यानयोः । कल्यो नीरोगः ॥ पल फल शल गतौ । शल्यमन्तर्गतं लोहादि ॥ शक्लृंट् शक्तौ । शक्यमसारम् ॥ ईर्ष्य ईर्ष्यार्थः । ईर्ष्यति ईर्ष्यणं वा । ईर्ष्या मात्सर्यम् ॥ षहि मर्षणे । सह्यः पश्चादर्णवपार्श्वशैलः ॥ बन्धंश् बन्धने । बन्ध्याप्रसूतिः ॥ ३५७ ॥

नञो हलिपतेः ॥ ३५८ ॥

नञ्पूर्वाभ्यामाभ्यां यः प्रत्ययो भवति ॥ हल विलेखने । अहल्या गौतमपत्नी ॥ पत्लृ गतौ । अपत्यं पुत्रसंतानः ॥ ३५८ ॥

सञ्जेर्ध् च ॥ ३५९ ॥

षञ्जं सङ्गे । इत्यस्माद्यः प्रत्ययो भवति धश्चान्तादेशो भवति ॥ संध्या दिननिशान्तरम् ॥ ३५९ ॥

मृशीपसिवस्यनिभ्यस्तादिः ॥ ३६० ॥

एभ्यस्तकारादिर्यः प्रत्ययो भवति ॥ मृंत् प्राणत्यागे । मर्त्यो मनुष्यः ॥ शीङ्क् स्वप्ने । शेत्यः शकुनिः संवत्सरोजगरश्च ॥ पसिर्निवासे सौत्रः । दन्त्यान्तः । पस्त्यं गृहम् ॥ वसं निवासे । वस्त्यो गुरुः ॥ अनक् प्राणने । अन्त्यो निरवासितश्चण्डालादिश्च ॥ ३६० ॥

ऋशिजनिपुणिकृतिभ्यः कित् ॥ ३६१ ॥

एभ्यः कियः प्रत्ययो भवति ॥ ऋश गतौ स्तुतौ वा । स्वरादिस्तालव्यान्तः। ऋश्यो मृगजातिः ॥ जनैचि प्रादुर्भावे । जन्यं संग्रामः । जाया पत्नी । ये न वेत्यात्वम् ॥ पुणत् शुभे । पुण्यं सत्कर्म ॥ कृतैत् छेदने । कृन्तति । कृत्या दुर्गा ॥ ३६१ ॥

कुलेर्ड् च वा ॥ ३६२ ॥

कुल बन्धुसंस्त्यानयोः । इत्यस्मात्कियः प्रत्ययो [भवति] डकारश्चान्तो वा भवति ॥ कुड्यं भित्तिः ॥ कुल्या सारणी ॥ ३६२ ॥

अगपुलाभ्यां स्तम्भेर्डित् ॥ ३६३ ॥

अग पुल इत्येताभ्यां परस्मात् स्तम्भेः सौत्राड्डियः प्रत्ययो भवति ॥ अगस्त्यः पुलस्त्यश्चर्षिः ॥ ३६३ ॥

शिक्यास्याढ्यमध्यविन्ध्यधिष्ण्याघ्न्यहर्म्यसत्यनित्यादयः ॥ ३६४ ॥

एते यप्रत्ययान्ता निपात्यन्ते ॥ शौंच् तक्षणे । इकश्चान्तः । शिक्यं लम्बमानः पिठर्याद्याधारः परिव्राड्भिक्षाभाजनस्थानमसारं च ॥ असूच् क्षेपणे । दीर्घत्वं च । आस्यं मुखम् ॥ आङ्पूर्वात् ढौकतेर्डिच्च । आढ्यो धनवान् ॥ मव बन्धने । ध् च । मध्यं गर्भः ॥ विधत् विधाने । स्वरान्नोन्तश्च । विन्ध्यः पर्वतः ॥ ञिधृषाट् प्रागल्भ्ये । नोन्तौ धिष् च । धिष्ण्यं भवनमासनं च । धिष्ण्योल्का ॥ नञ्पूर्वात् हन्तेरुपान्त्यलोपश्च । अघ्न्यो धर्मो गोपतिश्च । अघ्न्या गौः ॥ हरतेर्मोन्तश्च । हर्म्यं सौधम् ॥ अस्तेः सत् च । सत्यममृषा ॥ निपूर्वात् यमेस्तोन्तो धातुलुक् च । नित्यं ध्रुवम् ॥ आदिग्रहणात् लघ्वकुल्यादयो भवन्ति ॥ ३६४ ॥

कुगुवलिमलिकणितन्याम्यक्षेरयः ॥ ३६५ ॥

एभ्योयः प्रत्ययो भवति ॥ कुंक् शब्दे । कवय ऋषिः पुरोडाशश्च ॥ गुंङ् शब्दे । गवयो गवाकृतिपशुविशेषः ॥ वलि संवरणे । वलयः कटकः ॥ मलि धारणे । मलयः पर्वतः ॥ कण शब्दे । कणय आयुधविशेषः ॥ तनूयी विस्तारे । तनयः पुत्रः ॥ अमण् रोगे । णिचि च । आमयो व्याधिः॥ अक्षौ व्याप्तौ च ।अक्षयो विष्णुः ॥ ३६५ ॥

चायेः केक् च ॥ ३६६ ॥

चायृग् पूजानिशामनयोः । इत्यस्मादयः प्रत्ययो[ भव ]त्यस्य च केक् इत्यादेशो भवति ॥ केकयः क्षत्रियः ॥ ३६६ ॥

लादिभ्यः कित् ॥ ३६७ ॥

लादिभ्यः किदयः प्रत्ययो भवति ॥ लांक् आदाने । लयः ॥ पां पाने । पयः ॥ ष्णांक् शौचे । स्नयः ॥ देंङ् पालने । दयः ॥ ट्धें पाने । धयः ॥ मेंङ् प्रतिदाने । मयः ॥ कैं शब्दे । कयः । खैं खदने । खयः ॥ श्रांक् पाके । श्रयः ॥ क्षैं जैं सैं क्षये । क्षयः । जयः । सयः ॥ त्रैंङ् पालने । त्रयः ॥ ओवैं शोषणे । वयः ॥ इत्यादि ॥ ३६७ ॥

कसेरलादिरिच्चास्य ॥ ३६८ ॥

कस गतौ । इत्यस्मादलादिरयः प्रत्ययो [ भव ] त्यकारस्य च इकारो भवति ॥ किसलयं प्रवालम् ॥ ३६८ ॥

वृङः शषौ चान्तौ ॥ ३६९ ॥

वृङ्श् संभक्तौ। इत्यस्मात्किदयः प्रत्ययो[ भवति ]शकारषकारौ चान्तौ भवतः ॥ वृशयं देशनामाकाशमासनं शयनं च ॥ वृषय आश्रयः ॥३६९॥

गयहृदयादयः ॥ ३७० ॥

गयादयः शब्दाः किदयप्रत्ययान्ता निपात्यन्ते ॥ गमेर्डिच्च। गयः प्राणः। गया तीर्थम् ॥ हरतेर्दोन्तश्च। हृदयं मनः स्तनमध्यं च ॥ आदिशब्दात् गणेरेयः। गणेयं गणनीयम् ॥ इत्यादि ॥ ३७० ॥

मुचेर्घयघुयौ ॥ ३७१ ॥

मुच्लृंती मोक्षणे। इत्यस्मात् घितावय उय इत्येतौ प्रत्ययौ कितौ भवतः ॥ मुकयो मुकुयश्चाश्वतरादश्वायां जातः ॥ घित्करणं कत्वार्थम् ॥ ३७१ ॥

कुलिलुलिकलिकषिभ्यः कायः ॥ ३७२ ॥

एभ्यः किदायः प्रत्ययो भवति ॥ कुल बन्धुसंस्त्यानयोः। कुलायो नीडम् ॥ लुलिः सौत्रः। लुलायो महिषः ॥ कलि शब्दसंख्यानयोः। कलायस्त्रिपुटः ॥ कष हिंसायाम्। कषायः कल्कादिः ॥ ३७२ ॥

श्रुदक्षिगृहिस्पृहिमहेराय्यः ॥ ३७३ ॥

एभ्य आय्यः प्रत्ययो भवति ॥ श्रुंट् श्रवणे। श्रवाय्यो यज्ञपशुर्महणसमर्थश्च श्रोता ॥ दक्षि हिंसागत्योः। दक्षाय्योमिर्गृध्रो वैनतेयो दक्षतमश्च ॥ गृहणि ग्रहणे। गृहयाय्यो वैनतेयो गृहकर्मकुशलः[च] ॥ स्पृहण् ईप्सायाम्। स्पृहयाय्यः स्पृहयालुर्घृतं च। स्पृहयाय्यानि तृणान्यहानि च ॥ महण् पूजायाम्। महयाय्योश्वमेधः ॥ ३७३ ॥

दधिषाय्यदीधीषाय्यौ ॥ ३७४ ॥

एतावाय्यप्रत्ययान्तौ निपात्येते ॥ दधिपूर्वात् स्यतेः षत्वं च। दधिषाय्यं पृषदाज्यं मृषावादी च ॥ दीव्यतेर्दीधीष् च। दीधीषाय्यं तदेव ॥ ३७४ ॥

कौतेरियः ॥ ३७५ ॥

कुंङ् शब्दे। इत्यस्मादियः प्रत्ययो भवति ॥ कवियं खलीनम् ॥३७५॥

कृगः क्रिन् ॥ ३७६ ॥

डुकृंग् करणे। इत्यस्मात्किदियः प्रत्ययो भवति ॥ क्रियो मेषः ॥ ३७६ ॥

मृजेर्णालीयः ॥ ३७७ ॥

मृजौक् शुद्धौ । इत्यस्माण्णिदालीयः प्रत्ययो भवति ॥ मार्जालीयं पापशोधनम् । मार्जालीयोग्निः ॥ मृजोस्य वृद्धिरिति वृद्धिः । णकार उत्तरार्थः ॥ ३७७ ॥

वेतेस्तादिः ॥ ३७८ ॥

वींक् प्रजननादौ । इत्यस्मात्तकारादिर्णिदालीयः प्रत्ययो भवति ॥ वैतालीयं छन्दोजातिः ॥ ३७८ ॥

धाग्राजिशृरमियाज्यर्तेरन्यः ॥ ३७९ ॥

एभ्योन्यः प्रत्ययो भवति ॥ डुधांग्क् धारणे च । धान्यं सस्यजातिः ॥ राजृग् दीप्तौ । राजन्यो ज्योतिरग्निः क्षत्रियश्च ॥ शृश् हिंसायाम् । शरण्यस्त्राता ॥ रमिं क्रीडायाम् । रमण्यं शोभनम् ॥ यजीं देवपूजादौ । णौ । याजन्यः क्षत्रियो यज्ञश्च ॥ ऋक् गतौ । अरण्यं वनम् ॥ ३७९ ॥

हिरण्यपर्जन्यादयः ॥ ३८० ॥

हिरण्यादयः शब्दा अन्यप्रत्ययान्ता निपात्यन्ते ॥ हरतेरिच्चातः । हिरण्यं सुवर्णादिद्रव्यम् ॥ परिपूर्वस्य पृषू सेचने । इत्यस्योपसर्गान्तलोपो धातोश्च जः समस्तादेशः । गर्जतेर्वा गकारस्य पकारः । पर्जन्य इन्द्रो मेघः शङ्कुः पुण्यं कुशलं च कर्म ॥ आदिशब्दादन्येपि ॥ ३८० ॥

वदिसहिभ्यामान्यः ॥ ३८१ ॥

आभ्यामान्यः प्रत्ययो भवति ॥ वद व्यक्तायां वाचि । वदान्यो दाता गुणवाञ्चारुभाषी च ॥ षहि मर्षणे । सहान्यः शैलः ॥ ३८१ ॥

वृङ एण्यः ॥ ३८२ ॥

वृङ्श् संभक्तौ । इत्यस्मादेण्यः प्रत्ययो भवति ॥ वरेण्यः परं ब्रह्म धाम श्रेष्ठः प्रजापतिरन्नं च ॥ ३८२ ॥

मदेः स्यः ॥ ३८३ ॥

मदैच् हर्षे । इत्यस्मात्स्यः प्रत्ययो भवति ॥ मत्स्यो मीनो धूर्तश्च ॥ ३८३ ॥

रुचिभुजिभ्यां किष्यः ॥ ३८४ ॥

आभ्यां किदिष्यः प्रत्ययो भवति ॥ रुचि अभिप्रीत्यां च । रुचिष्यो वल्लभः सुवर्णं च ॥ भुजंप् पालनाभ्यवहारयोः । भुजिष्य आचार्यो भोक्तान्नं मृष्टोदनो दासश्च । भुजिष्यं धनम् ॥ ३८४ ॥

वच्यर्थिभ्यामुष्यः ॥ ३८५ ॥

आभ्यामुष्यः प्रत्ययो भवति ॥ वचंक् भाषणे । वचुष्यो वक्ता ॥ अर्थणि उपयाचने । अर्थुष्योर्थी ॥ ३८५ ॥

वचोथ्य उत् च ॥ ३८६ ॥

वचंक् भाषणे । इत्यस्मादथ्यः प्रत्ययो[ भव ]त्यस्य च उत् इत्यादेशो भवति ॥ उतथ्य ऋषिः ॥ ३८६ ॥

भीवृधिरुधिवज्यगिरमिवमिवपिजपिशकिस्फायिवन्दीन्दिपदिमदिमन्दिच-न्दिदसिघसिनसिहस्यसिवाशिदहिसहिभ्यो रः ॥ ३८७ ॥

एभ्यो रः प्रत्ययो भवति ॥ ञिभींक् भये । भेरो भेदः करभः शरो मण्डूको दुन्दुभिः कातरश्च । ऋफिडादित्वाल्लत्वे । भेलश्चिकित्सायन्थकारः शरो मण्डूकः प्रक्षीणोप्राज्ञश्च ॥ वृधूङ् वृद्धौ । वर्ध्रश्चर्मविकारश्चन्द्रो मेघश्च ॥ रुधूंपी आवरणे । रोध्रो वृक्षविशेषः ॥ वज गतौ । वज्रं कुलिशं रत्नविशेषश्च ॥ अग कुटिलायां गतौ । अग्रः प्राग्भागः श्रेष्ठश्च ॥ रमिं क्रीडायाम् । रम्रः कामुकः ॥ टुवमू उद्गिरणे । वम्रो धर्मविशेषो धूमश्च । वम्र्युपदेहिका ॥ डुवपीं बीजसंताने । वप्रः केदारः प्राकारो वास्तुभूमिश्च ॥ जप मानसे च । जप्रो ब्राह्मणो मण्डूकश्च ॥ शकॢंट् शक्तौ । शक्र इन्द्रः ॥ स्फायैङ् वृद्धौ । स्फारमुल्बणं प्रभूतं च ॥ वदुङ् स्तुत्यभिवादनयोः । वन्द्रो बन्दी केतुः कामश्च । वन्द्रं समूहः ॥ इदु परमैश्वर्ये । इन्द्रः शक्रः ॥ पदिंच् गतौ । पद्रं ग्रामादिनिवेशः शून्यं च ॥ मदैच् हर्षे । मद्रा जनपदः क्षत्रियश्च । मद्रं सुखम् ॥ मदुङ् स्तुत्यादिषु । मन्द्रो मधुरस्वरः । मन्द्रं गम्भीरम् ॥ चदु दीप्त्याह्लादयोः । चन्द्रः शशी सुवर्णं च ॥ दसूच् उपक्षये । दस्रः शिशिरं चन्द्रमा अश्विनोर्ज्येष्ठश्च । दस्रावश्विनौ ॥ घस्लृं अदने । घस्रो दिवसः ॥ णसि कौटिल्ये । नस्रो नासिकापुट ऋषिश्च ॥ हसे हसने । हस्रो दिनं घातको हर्षुलश्च । हस्रं बलाधानं संनिपातश्च । सहस्रं दश शतानि ॥ असूच् क्षेपणे । अस्रमश्रु ॥ वाशिच् शब्दे । वाश्रः पुरुषः शब्दः संघातः शरभो रासभः पक्षी च । वाश्रा धेनुः ॥ दहं भस्मीकरणे । दह्रोग्निः शिशुः सूर्यश्च ॥ षहि मर्षणे । सह्रः शैलः ॥ ३८७ ॥

ऋज्यजितञ्चिवञ्चिरिपिसृपितृपिदृपिक्षुपिक्षिपिक्षुदिमुदिरुदिछिदिभि-दिखिदुन्दिदम्भिशुम्भ्युम्भिदंशिचिसिवहिविसिवसिशुचिसिधि-गृधिवीन्धिश्वितिवृतिनीशीसुसूभ्यः कित् ॥३८८॥

एभ्यः कित्रः प्रत्ययो भवति ॥ ऋजि गतिस्थानार्जनोर्जनेषु । ऋज्रो नाय-

क इन्द्रोर्थश्च ॥ अज क्षेपणे च । अज्रो वीरो विकान्तः ॥ तञ्चू वञ्चू गतौ । तक्र-मुदश्वित् । वक्रः कुटिलोङ्गारको विष्णुश्च । उभयत्र न्यङ्क्वादित्वात्कत्वम् ॥ रिपिः सौत्रः । रिप्रं कुत्सितम् ॥ सृप्लृं गतौ । सृप्रश्चन्द्रः । सृप्रं मधु । सृप्रा नाम नदी ॥ तृपौच् प्रीतौ । तृप्रं मेघान्तघर्म आज्यं काष्ठं पापं दुःखं च ॥ दृपौच् हर्षमोहनयोः। दृप्रं बलं दुःखं च । दृप्रा बुद्धिः ॥ चुप मन्दायां गतौ । चुप्रो वायुः ॥ क्षिपींत् प्रेरणे । क्षिप्रं शीघ्रम् ॥ क्षुपिः सादने सौत्रः । क्षुप्रं तुहिनं कण्टकिगुल्मश्च ॥ क्षुदूंपी संपेषे । क्षुद्रमणु जलचरश्च । क्षुद्रा मधुकर्यः । क्षुद्रो हिंस्रः ॥ मुदि हर्षे । मुद्रा चिह्नकरणम् ॥ रुदृक् अश्रुविमोचने । रुद्रः शम्भुः ॥ छिदूंपी द्वैधीकरणे । छिद्रं विवरम् ॥ भिदूंपी विदारणे । भिद्रमदृढम् । भिद्रः शरः ॥ खिदंत् परिघाते । खिद्रं विघ्नः । खिद्रो विषाणो विषादश्चन्द्रो दीनश्च ॥ उन्दैप् क्लेदने । उद्र ऋषिर्म-त्स्यश्च । सम्पूर्वात् समुन्दन्ति । आर्द्रीभवन्ति वेलाकाले नद्योस्मादिति समुद्रः सा-गरः । भीमादित्वादपादाने ॥ दम्भूट् दम्भे । दभ्रोल्पश्चन्द्रः कुशः कुशलः सूर्यश्च ॥ शुभि दीप्तौ । शुभ्रोवदातः ॥ उम्भत् पूरणे । उभ्रो मेघः पेलवश्च ॥ दंशं दशने । दभ्रो दन्तः सर्पश्च ॥ चिंगट् चयने । चिरमशीघ्रम् ॥ षिंगट् बन्धने । सिरा रु-धिरस्रोतोवाहिनी नाडी ॥ वहीं प्रापणे । उह्रोनड्वान् ॥ विसच् प्रेरणे । विस्रमामगन्धि-कम् ॥ वसं निवासे । उस्रो रश्मिः । बाहुलकात् षत्वं न भवति । उस्रा गौः ॥ शुच शोके । शुक्रो महो मासः शुक्रश्च । शुक्रं रेतः । लत्वे । शुक्लो वर्णः । कत्वं न्यङ्क्वादित्वात् ॥ षिधू गत्याम् । सिध्रः साधुर्वृक्षो मांसप्रभेदश्च ॥ गृधूच् अभिकाङ्क्षायाम् । गृध्रः श्येनो लुब्धकः कङ्कश्च ॥ ञिइन्धैपि दीप्तौ । विपूर्वात् ॥ वीध्रोग्निर्वायुर्नभो निर्मलः पूर्णचन्द्रमण्डलं च ॥ श्विताङ् वर्णे । श्वित्रं श्वेतकुष्ठम् । वृतूङ् वर्तने । वृत्रो दानवो बलवान्रिपुश्च । वृत्रं पापम् ॥ णींग् प्रापणे । नीरं ज-लम् ॥ शीङ्क् स्वप्ने । शीरोजगरः ॥ षुंग्ट् अभिषवे । सुरो देवः । सुरा मद्यम् ॥ षूङौच् प्राणिप्रसवे । सूर आदित्यो रश्मिश्च ॥ ३८८ ॥

इण्धाग्भ्यां वा ॥ ३८९ ॥

आभ्यां रः प्रत्ययो भवति स च किद्वा भवति ॥ इण्क् गतौ । इरा मदनीयपानविशेषो मेदिनी च ॥ ऐरावणः ॥ डुधांग्क् धारणे च । धीरः सत्त्ववान्धृतिमांश्च ॥ धारा जलयष्टिः खड्गावयवोश्वगतिविशेषश्च ॥ ३८९ ॥

चुम्बिकुम्बितुम्बेर्नलुक् च ॥ ३९० ॥

एभ्यः किद्रः प्रत्ययो भवति नकारस्य चैषां लुग्भवति ॥ चुबु वक्त्रसंयोगे। चुब्रं वक्त्रम्। चुब्रो रश्मिः ॥ कुबु आच्छादने। कुब्रं संकटं भग्नपृष्ठः फल्गुहस्ती वर्म गृहाच्छादनं च ॥ तुबु अर्दने। तुब्रं कुटिलम् ॥ ३९० ॥

भन्देर्वा ॥ ३९१ ॥

भदुङ् सुखकल्याणयोः। इत्यस्माद्रः प्रत्ययो[भवति]नकारस्य च लुग्वा भवति ॥ भद्रं भन्द्रं च कल्याणं सुखं च ॥ ३९१ ॥

चिजिशुसिमितम्यम्यर्देर्दीर्घश्च ॥ ३९२ ॥

एभ्यो रः प्रत्ययो[भवति] दीर्घश्चैषां भवति ॥ चिंग्ट् चयने। चीरं जीर्णवस्त्रं वल्कलं च ॥ जि अभिभवे। जीरोऽजाज्यमिर्वायुरश्वश्च। जीरमन्नम्। लत्वे। जीलश्चर्मपुटः ॥ शुं गतौ। शूरो विक्रान्तः ॥ षिंग्ट् बन्धने। सीरं हलम्। सीरा हलविलेखिका लेखा ॥ डुमिंग्ट् प्रक्षेपणे। मीरः समुद्रः। मीरं जलम्। मीरा मांसपचनी देवसीमा च ॥ तमूच् काङ्क्षायाम् ॥ ताम्रो वर्णः शुल्वं च ॥ अम गतौ। आम्रो वृक्षः ॥ अर्द गतियाचनयोः। आर्द्रं सरसम् ॥ ३९२ ॥

चकिरमिविकसेरुच्चास्य ॥ ३९३ ॥

चकिरमिभ्यां विपूर्वाच्च कसे रः प्रत्ययो[भव]त्यकारस्य चैषामुकारो भवति ॥ चकि तृप्तिप्रतीघातयोः। चुक्रोऽम्लो रसो बीजपूरकमिश्लिकाद्यरो निमन्त्रणं च ॥ रमि क्रीडायाम्। रुग्रः सुन्दर आदित्यसारथिर्ब्राह्मणो विनाशश्च ॥ कस गतौ। विकुस्रश्चन्द्रः समुद्रश्च। विकुस्रं पुष्पितम्। बाहुलकाद्विकसेर्विकल्पः। विकस्रः ॥ ३९३ ॥

शदेरूच्च ॥ ३९४ ॥

शद्लृं शातने। इत्यस्माद्रः प्रत्ययो[भव]त्यकारस्य च ऊकारो भवति ॥ शूद्रश्चतुर्थो वर्णः ॥ ३९४ ॥

कृतेः कृकृच्छ्रौ च ॥ ३९५ ॥

कृतैत् छेदने। इत्यस्माद्रः प्रत्ययो[भव]त्यस्य च कृ कृच्छ् इत्यादेशौ भवतः ॥ क्रूरममृदु। क्रूरः पापकर्मा। कृच्छ्रं दुःखम् ॥ ३९५ ॥

**खुरक्षुरदूरगौरविप्रकुम्भ्रश्वभ्रधूम्रान्धरन्ध्रशिलिन्ध्रौड्रपुण्ड्रतीव्रनीव्रशीघ्रोग्रतुम्रभुम्रनिद्रातन्द्रासान्द्रगुन्द्राराजिरादयः ॥ ३९६ ॥**

एते रप्रत्ययान्ता निपात्यन्ते ॥ खुरत् छेदने । क्षुरत् विलेखने । अनयो रलोपो गुणाभावश्च । खुरः शफः ॥ क्षुरो नापितभाण्डम् ॥ ननु च खुरक्षुरशब्दौ नाम्युपान्त्यप्रीकृगृज्ञः क इति केन सिध्यतः । सत्यम् । तत्र कर्त्रर्थे इह तु संप्रदानाद्यान्यत्रोणादय इत्यर्थभेदः । असर्वविषयत्वं वानयोर्ज्ञाप्यते । यथा । अदेः परोक्षायां वा घस्लादेशवचनेन घसेः । एवमन्यत्रापि स्वयमभ्यूह्यम् ॥ दुर्पूर्वात् इणो लुक् च । दूरं विप्रकृष्टम् ॥ गवतेर्वृद्धिश्च । गौरोऽवदातः ॥ विपूर्वात् पातेर्लुक् च । विप्रो ब्राह्मणः । विविधं प्रातीति वा विप्रः ॥ गुपच् व्याकुलत्वे । आदेः कत्वं च । कुप्रं गहनं गृहाच्छादनं च ॥ ट्वोश्वि गतिवृद्ध्योः । अकारो मोऽन्तश्च । श्वभ्रं बिलमाकाशं च ॥ आप्लृट् व्याप्तौ । अभादेशश्च । अभ्रं मेघः ॥ धूग्श् कम्पने । मोऽन्तश्च । धूम्रो वर्णविशेषः ॥ अहुङ् गतौ । धश्च । अन्धः क्षत्रजातिः ॥ रधेः स्वरान्मोऽन्तश्च । रन्ध्रं छिद्रम् ॥ ञिइन्धैपि दीप्तौ । अस्य च तालव्यादिशिलश्चादिः । शिलिन्ध्रमुद्भिद्विशेषः ॥ ओणेर्डश्च । ओड्रः क्षत्रजातिः ॥ पुणेः स्वरान्मोऽन्तो डश्च । पुण्डेर्वा रूपम् । पुण्ड्रः क्षत्रजातिस्तिलकश्च ॥ तिजेर्वो दीर्घश्च तीवतेर्वा । तीव्रस्तीक्ष्ण उत्कृष्टश्च ॥ नियो वोऽन्तश्च नीवतेर्वा । नीव्रं गृहच्छदिःपर्यन्तः ॥ श्यैङ ईत्वं यलोपो घश्चान्तः । शीघ्रस्त्वरितः ॥ उबेरुषेर्वा गः किच्च । उग्रो रुद्रो रौद्रश्च ॥ तुदीत् व्यथने । गः किच्च । तुम्रं शृङ्गम् ॥ भुजंप् पालनाभ्यवहारयोः । गः किच्च । भुम्रो रश्मिसमूहः ॥ णिदु कुत्सायाम् । किच्चलोपश्च । निद्रा स्वापः ॥ तमूच् काङ्क्षायाम् । दोऽन्तश्च । तन्द्रालस्यम् ॥ षद्लृ विशरणगत्यवसादनेषु । अस्य स्वरान्नोऽन्तो वृद्धिश्च । सान्द्रं घनम् ॥ गुदेः स्वरान्नोऽन्तश्च । गुन्द्रा जलतृणविशेषः ॥ राजे रञ्जेर्वा किच्च इश्चोपान्त्यस्य । रिञ्जो नायकः ॥ आदिग्रहणादन्येऽपि ॥ ३९६ ॥

**ऋच्छिचटिवटिकुटिकठिवठिमठघडिशीकृशीभृकदिवदिकन्दिमन्दिसुन्दिमन्थिमञ्जिपञ्जिपिञ्जिकमिसमिचमिवमिभ्रम्यमिदेविवासिकास्यर्तिजीविबर्बिकुशुदोररः ॥ ३९७ ॥**

एभ्योऽरः प्रत्ययो भवति ॥ ऋच्छत् इन्द्रियप्रलयमूर्तिभावयोः । ऋच्छरस्त्वरावान् । ऋच्छरा वेश्या कुलटा त्वराङ्गुलिश्च ॥ चटण् भेदे । चटरस्तस्करः ॥

वट वेष्टने । वटरो मधुकण्डरा ॥ कुटन् कौटिल्ये । कोटरं छिद्रम् । वाहुलका-द्गुणः ॥ कठ कृच्छ्रजीवने । कठरो दरिद्रः ॥ वठ स्थौल्ये । वठरो मूर्खो बृहद्देश्च ॥ मठ मदनिवासयोश्च । मठर ऋषिरज्ञानी गोत्रमलसश्च ॥ अठ उद्यमे । अठरो वृक्षः ॥ शीकृङ् सेचने । शीकरो जललवसेकः ॥ शीभृङ् कत्थने । शीभरो ह-स्तिहस्तमुक्तो जललवसेकः ॥ कदिः सौत्रः । कदरो वृक्षविशेषः ॥ बद स्थैर्ये । ब-दरी फलवृक्षः ॥ कदुङ् वैक्लव्ये । कन्दरो गिरिगर्तः ॥ मदुङ् स्तुत्यादौ । मन्दरः शैलः ॥ सुन्दिः सौत्रः शोभायाम् । सुन्दरो मनोज्ञः ॥ मन्थश् विलोडने । म-न्थरो मन्दः खर्वश्च ॥ मञ्जिपञ्जी सौत्रौ । मञ्जर्याम्रादिशिखा । गौरादित्वाङ्ङीः ॥ पञ्जरः शुकाद्यवरोधस्थ ॥ पिजुण् हिंसावलदाननिकेतनेषु । पिञ्जरः पिशङ्गः ॥ कमूङ् कान्तौ । कमरो मूर्खः कार्मुकं कोमलश्चौरः कान्तश्च ॥ षम वैक्लव्ये । स-मरः संग्रामः ॥ चमू अदने । चमर आरण्यपशुः ॥ टुवमू उद्गिरणे । वमरो दुर्मेधाः ॥ भ्रमुच् अनवस्थाने । भ्रमरः षट्पदः ॥ अम गतौ । अमरः सुरः ॥ दे-वृङ् देवने । देवरः पत्यनुजः ॥ वसं निवासे । णौ । वासरो दिवसः कामोर्मिः प्रावृट् च । अन्ये वाशिच् शब्दे । इत्यस्मादपि तालव्यान्तादिच्छन्ति । वाशरोऽभि-मेघो दिवसश्च ॥ कासृङ् शब्दकुत्सायाम् । कासरो महिषः ॥ अंक् गतौ । अररः कपाटो बुधो भ्रमणो गृहं हरणं शलाका च ॥ जीव प्राणधारणे । जीवरो दीर्घा-युः ॥ बर्ब गतौ । बर्बरो म्लेच्छजातिः । बर्बरी कुञ्चिताः केशाः ॥ कुंङ् शब्दे । कबरो वर्णः । कबरी वेणिः ॥ शुं गतौ । शबरो म्लेच्छजातिः । शव गतौ । इत्यस्याप्येके ॥ टुदुंट् उपतापे । दवरो गुणः ॥ ३९७ ॥

## अवेर्ध् च वा ॥ ३९८ ॥

अव रक्षणादौ । इत्यस्मादरः प्रत्ययो [ भवति ] धकारश्चान्तादेशो वा भवति ॥ अधरो हीन उपरिभावस्य प्रतियोगी दन्तच्छदश्च ॥ अवरः परप्रतियोगी ॥ ३९८ ॥

## मृयुन्दिपिठिकुरिकुहिभ्यः कित् ॥ ३९९ ॥

एभ्यः किदरः प्रत्ययो भवति ॥ मृदश् क्षोदे । मृदरो व्याधिरतिकायः क्षोदश्च ॥ उन्दैप् क्लेदने । उदरं जठरं व्याधिश्च ॥ पिठ हिंसासंक्लेशयोः । पिठरं भाण्डम् ॥ कुरत् शब्दे । कुररो जलपक्षिजातिः ॥ कुहणि विस्मापने । कुहरं ग-म्भीरगर्तः ॥ ३९९ ॥

शाखेरिदेतौ चातः ॥ ४०० ॥

शाखृ व्याप्तौ । इत्यस्मादरः प्रत्ययो [ भव ] त्याकारस्य च इकार-एकारौ भवतः ॥ शिखरमग्रम् ॥ शेखर आपीडः ॥ ४०० ॥

शर्पेः फ् च ॥ ४०१ ॥

शर्पीं आक्रोशे । इत्यस्मादरः प्रत्ययो [भवति] फकारश्चान्तादेशो भवति ॥ शफरः क्षुद्रमत्स्यः ॥ ४०१ ॥

दमेर्णिद्वा दश्च डः ॥ ४०२ ॥

दमूच् उपशमे । इत्यस्मादरः प्रत्ययो [ भवति ]स च णिद्वा दकारस्य च डकारो भवति ॥ डामरो भयानकः ॥ डमरः स एव ॥ ४०२ ॥

जठरक्रकरमकरशंकरकर्परकूर्परतोमरपामरप्रामरप्राग्भरसगरनगरतगरोर्दरादरशृदरदृदरकृदरकुकुन्दरगोर्वराम्बरमुखरखरडहरकुञ्जराजगरादयः ॥ ४०३ ॥

एते किदरप्रत्ययान्ता निपात्यन्ते ॥ जनेष्ठ च । जठरं कोष्ठः ॥ क्रमेः क च । क्रकरो गौरतित्तिरः ॥ मङ्केर्नलोपश्च । मकरो ग्राहः ॥ शम्पूर्वात् किरतेर्डिच्च । शंकरो रुद्रः ॥ कृपेरुपान्त्यस्य ऊर् च वा । कर्परं कपालम् । कूर्परं कुफणी ॥ ताम्यतेरत ओच्च । तोमर आयुधम् ॥ पातेर्मोऽन्तश्च । पामरो ग्रामीणः ॥ प्रपूर्वात् अमतेः । प्रामरो ग्राम्यमन्दजातिः ॥ प्रपूर्वात् अस्तेर्मोऽन्तश्च । प्राग्भरो नरपशुः ॥ सहिनह्योर्गे च । सगरो द्वितीयश्चक्रवर्ती ॥ नगरं पुरम् ॥ तङ्केर्नलोपश्च । तगरो वृक्षविशेषः ॥ ऊर्जेः परात् दृणातेर्डित् जलुक् च । ऊर्जा बलेन दृणाति बिभेति । ऊर्दरो दुर्बलः ॥ अदु बन्धने । नलुक् च । अदरं वंशो वृक्षः संग्रामश्चञ्चुसमूहो मातृवाहश्च ॥ शृश् हिंसायाम् । दृश् विदारणे । अनयोर्ह्रस्वत्वं दश्चान्तः ॥ शृदरः सर्पः ॥ दृदरं विषं भयं च ॥ डुकृंग् करणे । दोऽन्तश्च । कृदरो वृक्षः सर्वकर्मप्रवृत्तो दस्युजनः कुसूलश्च ॥ कुपूर्वात् स्कुटुङ् आप्रवणे । सलोपश्च । कुकुन्दरं श्रोणिकूपकः ॥ गोपूर्वात् वृणोः ङित् । रश्चादिः । गोर्वरः करीषः ॥ अमेर्बोऽन्तश्च । अम्बरं वस्त्रमाकाशं च ॥ मुहेः ख च । मुखरो वाचालः ॥ खनेर्डिच्च । खरो रासभः ॥ दहेरादेर्डश्च । डहरं हृत्कमलम् ॥ कूज अव्यक्ते शब्दे । ह्रस्वत्वं स्वरान्मोऽन्तश्च ।

कुञ्जरो हस्ती ॥ अजेरगश्चान्तो वीभावाभावश्च । अजगरः शयुः ॥ आदिग्रहणात् कोटराङ्कुरशङ्कुरपाण्डरवानरादयो भवन्ति ॥ ४०३ ॥

मुदिगूरिभ्यां टिद्गजौ चान्तौ ॥ ४०४ ॥

आभ्यां टिदरः प्रत्ययो [ भवति ] गकारजकारौ च यथासंख्यमन्तौ भवतः ॥ मुदि हर्षे । मुद्गरः प्रहरणविशेषः । मुद्गरी स्त्री ॥ गूरैचि गतौ । गूर्जरः सौराष्ट्रादिः । गूर्जरी स्त्री ॥ ४०४ ॥

अग्यङ्गिमदिमन्दिकडिकसिकासिमृजिकञ्जिकलिमलिकचिभ्य आरः ॥ ४०५ ॥

एभ्य आरः प्रत्ययो भवति ॥ अग कुटिलायां गतौ । अगारं वेश्म ॥ अगु गतौ । अङ्गारो निर्वातज्वालो निर्वाणश्चोल्मुकावयवो भूमिसुतश्च ॥ मदैङ् हर्षे । मदारः पानशौण्डो वराहो हस्त्यलसश्च ॥ मदुङ् स्तुत्यादौ । मन्दारो वृक्षविशेषः ॥ कडत् मदे । कडारः पिङ्गलो विषमदशनश्च ॥ कस गतौ । कसारो हिंस्रः ॥ कासृङ् शब्दकुत्सायाम् । कासारः पल्वलम् ॥ मृजौक् शुद्धौ । मार्जारो विडालः ॥ कञ्जिः सौत्रः । कञ्जारः कुसूलजातिर्यूपो व्यञ्जनं च ॥ कलि शब्दसंख्यानयोः । कलारो विषमरूपः ॥ मलि धारणे । मलारोऽलसः । मलमिवारातौ दोस्येति [?] वा मलारः ॥ कचि बन्धने । कचारोऽपनेयतृणबुसपांशुविकारः ॥ ४०५ ॥

त्रः कादिः ॥ ४०६ ॥

तॄ प्लवनतरणयोः । इत्यस्मात्ककारादिरारः प्रत्ययो भवति ॥ तर्कारी वृक्षः ॥ ४०६ ॥

कृगो मादिश्च ॥ ४०७ ॥

करोतेर्मकारादिः ककारादिश्चारः प्रत्ययो भवति ॥ कर्मारो लोहकारः ॥ कर्कारो वृक्षः ॥ ४०७ ॥

तुषिकुठिभ्यां कित् ॥ ४०८ ॥

आभ्यां किदारः प्रत्ययो भवति ॥ तुषंच् तुष्टौ । तुषारो हिमम् ॥ कुठिः सौत्रः । कुठारः परशुः ॥ ४०८ ॥

कमेरत उच्च ॥ ४०९ ॥

कमूङ् कान्तौ । इत्यस्मादारः प्रत्ययो [ भव ] त्यकारस्य च उकारो भवति ॥ कुमारो महासेनोऽश्वो बालश्च ॥ ४०९ ॥

कनेः कोविदकर्बुदकाञ्चनाश्च ॥ ४१० ॥

कनै दीप्त्यादौ । इत्यस्मादारः प्रत्ययो[ भव ]त्यस्य च कोविद कर्बुद काञ्चन इत्यादेशा भवन्ति ॥ कोविदारः । कर्बुदारः । काञ्चनारश्च वृक्षविशेषाः ॥ ४१० ॥

द्वारशृङ्गारभृङ्गारकह्लारकान्तारकेदारखारडादयः ॥ ४११ ॥

एत आरप्रत्ययान्ता निपात्यन्ते ॥ उभत् पूरणे । द्वादेशश्च । द्वारं द्वाः ॥ श्रयतेस्तालव्यादिः शृङ्गश्च । शृङ्गारो रसविशेषो विदग्धता च ॥ भृगो भृङ् च । भृङ्गारो हस्तिमुखाकारगलन्तिका ॥ कलेर्हश्च स्वरात्परः । कह्लारमुत्पलविशेषः ॥ कमेस्तोऽन्तो दीर्घश्च । कान्तारमरण्यम् ॥ कदेः सौत्रस्यात एच्च । केदारो वप्रः ॥ खनेर्डिच्च । खारी चतुर्द्रोणम् । खारडिति टकारो ङ्यर्थः ॥ आदिग्रहणात् शिशुमारादयोऽपि भवन्ति ॥ ४११ ॥

मदिमन्दिचन्दिपदिखदिसहिवहिकुसृभ्य इरः ॥ ४१२ ॥

एभ्य इरः प्रत्ययो भवति ॥ मदैच् हर्षे । मदिरा सुरा ॥ मदुङ् स्तुत्यादौ । मन्दिरं वेश्म नगरं च ॥ चदु दीप्त्याह्लादयोः । चन्दिरश्चन्द्रमा हस्ती च । चन्दिरं चन्द्रिकावज्जलं च ॥ पदिंच् गतौ । पदिरो मार्गः ॥ खद हिंसायां च । खदिरो वृक्षविशेषः ॥ षहि मर्षणे । सहिरः पर्वतः ॥ वहीं प्रापणे । वहिरो बलीवर्दः ॥ कुंङ् शब्दे । कविरोऽक्षिकोणः ॥ सृं गतौ । सरिरं जलम् । लत्वे । सलिलम् ॥ ४१२ ॥

शवशशेरिश्चातः ॥ ४१३ ॥

आभ्यामिरः प्रत्ययो[भव]त्यकारस्य च इकारो भवति ॥ शव गतौ । तालव्यादिः । शिविरं सैन्यसंनिवेशः ॥ शश प्लुतिगतौ । शिशिरं शीतलमृतुश्च ॥ ४१३ ॥

श्रन्थेः शिथ् च ॥ ४१४ ॥

श्रथुङ् शैथिल्ये । इत्यस्मादिरः प्रत्ययो[भव]त्यस्य च शिथ् इत्यादेशो भवति ॥ शिथिरं श्लथम् । लत्वे । शिथिलम् ॥ ४१४ ॥

अशेर्णित् ॥ ४१५ ॥

अश्नोतेरश्नातेर्वा णिदिरः प्रत्ययो भवति ॥ आशिरो विष्णुरादित्यश्च। आशिरो बह्वाशी ॥ ४१५ ॥

शुषीषिबन्धिरुधिरुचिमुचिमुहिमिहितिमिमुदिखिदिछिदि-
भिदिस्थाभ्यः कित् ॥ ४१६ ॥

एभ्यः किदिरः प्रत्ययो भवति ॥ शुषंच् शोषणे। शुषिरं छिद्रम् ॥ इषत् इच्छायाम्। इषिरं तृणम्। इषिरोग्निराहारः क्षिप्रः सेव्यश्च ॥ बन्धंश् बन्धने। बधिरः श्रुतिविकलः ॥ रुधूंपी आवरणे। रुधिरं द्वितीयो धातुः ॥ रुचि अभिप्रीत्यां च। रुचिरं दयितं दीप्तिमच्च ॥ मुच्लृंती मोक्षणे। मुचिरो धर्मः सूर्यो मेघश्च ॥ मुहौच् वैचित्ये। मुहिरः कन्दर्पः सूर्यश्च। मुहिरं तमः ॥ मिहं सेचने। मिहिरो मेघः सूर्यश्च। मिहिरं तोयम् ॥ तिमच् आर्द्रभावे। तिमिरं तमस्तीव्रं रोगश्च कश्चित् ॥ मुदि हर्षे। मुदिरो मेघः सूर्यश्च ॥ खिदंत् परिघाते। खिदिरश्चासस्तस्करश्च ॥ छिदूंपी द्वैधीकरणे। छिदिर उन्दुरोग्निश्च। छिदिरं शस्त्रम् ॥ भिदूंपी विदारणे। भिदिरोशनिर्भेदश्च ॥ ष्ठां गतिनिवृत्तौ। स्थिरोचलः ॥ ४१६ ॥

स्थविरपिठिरस्फिराजिरादयः ॥ ४१७ ॥

एते किदिरप्रत्ययान्ता निपात्यन्ते। तिष्ठतेर्वोन्तो ह्रस्वश्च। स्थविरो वृद्धः ॥ पचतेरत इत्वं ठश्च। पिठिरं साधनभाण्डम् ॥ स्फायतेर्डिच्च। स्फिरः स्फारो वृद्धश्च ॥ अजेर्वीभावाभावश्च। अजिरमङ्गणं नगरं देवो वेश्म च ॥ आदिग्रहणादन्येपि ॥ ४१७ ॥

कृशृपृपूमञ्जिकुटिकटिपटिकण्डिशौण्डिहिंसिभ्य ईरः ॥ ४१८ ॥

एभ्य ईरः प्रत्ययो भवति ॥ कृत् विक्षेपे। करीरो वनस्पतिविशेषो वंशाद्यङ्कुरश्च ॥ शृश् हिंसायाम्। शरीरं वपुः ॥ पृश् पालनपूरणयोः। परीरं बलं लाङ्गलमुखं च ॥ पूग्श् पवने। पवीरं रज्जुस्थानं फलं पवित्रं बीजावपनं च ॥ मञ्जिः सौत्रः। मञ्जीरं नूपुरः ॥ कुटत् कौटिल्ये। कुटीरमालयः कर्कटकश्चन्द्राश्रयराशिश्च। कोटीरं मुकुटः। बाहुलकाद्गुणः ॥ कटे वर्षावरणयोः। कटीरं जनपदो जघनं जलं च ॥ पट गतौ। पटीरः कन्दर्पः। पटीरं कार्मुकं स्फिक् च ॥ कडु मदे। कण्डीरं हरितकम् ॥ शौडृ गर्वे। शौण्डीरो गर्वितः सत्त्ववान्तीक्ष्णश्च ॥ हिंसूप् हिंसायाम्। हिंसीरः श्वापदो हिंस्रश्च ॥ ४१८ ॥

घसिवशिपुटिकुरिकुलिकाभ्यः कित् ॥ ४१९ ॥

एभ्यः किदीरः प्रत्ययो भवति ॥ घस्लृ अदने । क्षीरं दुग्धं मेघश्च ॥ वशक् कान्तौ । उशीरं वीरणीमूलम् ॥ पुटत् संश्लेषणे । पुटीरः कूर्मः ॥ कुरत् शब्दे । कुरीरं मैथुनं वेश्म च । कुरीरो मालाविशेषः कम्बलश्च ॥ कुल बन्धुसंस्त्यानयोः । कुलीरः कर्कटः ॥ कैं शब्दे । कीरः शुकः काश्मीरकश्च ॥ ४१९ ॥

कशेर्मोन्तश्च ॥ ४२० ॥

कश शब्दे । इत्यस्मात्तालव्यान्तादीरः प्रत्ययो[ भवति ]मश्चान्तो भवति ॥ कश्मीरा जनपदः ॥ ४२० ॥

वनिवपिभ्यां णित् ॥ ४२१ ॥

आभ्यां णिदीरः प्रत्ययो भवति ॥ वन भक्तौ । वानीरो वेतसः ॥ डुवपीं बीजसंताने । वापीरो मेघोमांघनिष्पत्ति च क्षेत्रम् ॥ ४२१ ॥

जम्बीराभीरगभीरगम्भीरकुम्भीरभडीरभण्डीरडिण्डीरकिर्मीरादयः ॥ ४२२ ॥

एत ईरप्रत्ययान्ता निपात्यन्ते ॥ जनेर्बोन्तश्च । जम्बीरो वृक्षविशेषः ॥ आप्नोतेर्भश्च । आभीरः शूद्रजातिः ॥ गमेर्भः स्वरान्नस्तु वा । गभीरोगाधोत्पलश्च । गम्भीरः स एव ॥ स्कुम्भेः सौत्रात्सलोपश्च । कुम्भीरो जलचरः ॥ भडुङ् परिभाषणे । अस्य नलुक् च वा । भडीरो भण्डीरश्च योद्धृवचने ॥ डीङो डित् । द्वित्वं पूर्वस्य नोन्तश्च । डिण्डीरः फेनः ॥ किरो मोन्तश्च । किर्मीरः कर्बुरः ॥ आदिग्रहणात् तूणीरमासीरमन्दीरकरवीरादयो भवन्ति ॥ ४२२ ॥

वाश्यसिवासिमसिमथ्युन्दिमन्दिचतिचङ्क्यङ्किकर्बिचकिबन्धिभ्य उरः ॥ ४२३ ॥

एभ्य उरः प्रत्ययो भवति ॥ वाशिच् शब्दे । वाशुरःशकुनिर्गर्दभश्च । वाशुरा रात्रिः ॥ असूच् क्षेपणे । असुरो दानवः ॥ वासण् उपसेवायाम् । वासुरा रात्रिः ॥ मसैच् परिणामे । मसुरा पण्यस्त्री । मसुरं चर्मासनं धान्यविशेषश्च ॥ मथे विलोडने । मथुरा नगरी ॥ उन्दैप् क्लेदने । उन्दुरो मूषिकः ॥ मदुङ् स्तुत्यादौ । मन्दुरा वाजिशाला ॥ चतेग् याचने । चतुरो विदग्धः ॥ चङ्किः सौत्रः । चङ्कति चेष्टते । चङ्कुरो रथोनवस्थितश्च ॥ अकुङ् लक्षणे । अङ्कुरः प्ररोहस्तदमतानभेदश्च । घञ्युपसर्गस्य बहुलमिति बहुलवचनाद्दीर्घत्वे । अङ्कूरः ॥ कर्ब गतौ । कर्बुरः शबलः ॥

चकि तृप्तिप्रतीघातयोः । चकुरो दृष्टान्तः ॥ बन्धंश्च बन्धने । बन्धुरो मनोज्ञो नम्रश्च ॥ ४२३ ॥

मङ्केर्नलुक् वोच्चास्य ॥ ४२४ ॥

मकुङ् मण्डने । इत्यस्मादुरः प्रत्ययो [भवति] नकारस्य लुक् अकारस्य च उकारो वा भवति ॥ मुकुर आदर्शो मुकुलं च । मकुर आदर्शः कल्को बालपुष्पं च ॥ ४२४ ॥

विधेः कित् ॥ ४२५ ॥

विधत् विधाने । इत्यस्मात्किदुरः प्रत्ययो भवति ॥ विधुरं वैशसम् ॥ ४२५ ॥

श्वशुरकुकुन्दुरदर्दुरनिचुरप्रचुरचिकुरकुकुरकुक्कुरकुर्कुरशर्कुर-नूपुरनिष्ठुरविधुरमद्गुरवागुरादयः ॥ ४२६ ॥

एते किदुरप्रत्ययान्ता निपात्यन्ते । आशुपूर्वात् शुपूर्वाश्च अश्नोतेरश्नातेर्वा आकारलोपश्च । श्वशुरो जम्पत्योः पिता ॥ कुपूर्वात् स्कुदुङ् आप्रवणे । इत्यस्मात्सलुक् च । कुकुन्दुरौ नितम्बकूपौ ॥ दृणातेर्दोन्तश्च । दर्दुरो मण्डूको मेघश्च ॥ निपूर्वात्प्रपूर्वात् चिनोतेश्चरतेर्वा डिच्च । निचुरस्तरुविशेषः । लस्वे । निचुलः ॥ प्रचुरं प्रायः ॥ चकेरिच्चास्य । चिकुरं युवतीनामीषन्निमीलितमक्षि । चिकुराः केशाः ॥ कुकेः कोन्तो वा । कुकुरो यादवः ॥ कुक्कुरः श्वा ॥ किरः कुर् कोन्तश्च । कुर्कुरः श्वा ॥ शृश् हिंसायाम् । गुणः कोन्तश्च । शर्कुरस्तरुणः ॥ णूत् स्तवने । पोन्तश्च । नूपुरस्तुलाकोटिः ॥ निपूर्वात् तिष्ठतेः । निष्ठुरः कर्कशः । निष्ठुरं काहलम् ॥ व्यथेर्विथ् च । व्यथन्तेऽस्माज्जना इत्यपादानेऽपि । विधुरो राक्षसः ॥ मदिवात्योर्गोन्तश्च । मद्गुरो मत्स्यविशेषः ॥ वागुरा मृगाबन्धः ॥ आदिग्रहणात् मन्थतेर्धश्च । मधुरो रसविशेष इत्यादि ॥ ४२६ ॥

मीमसिपशिखटिखडिखर्जिकर्जिसर्जिकृपिवल्लिमाण्डिभ्य ऊरः ॥ ४२७ ॥

एभ्य ऊरः प्रत्ययो भवति ॥ मीङ्च् हिंसायाम् । मयूरः शिखी । मह्यां रौति मयूर इति पृषोदरादिषु संज्ञाशब्दानामनेकधा व्युत्पत्तिं लक्षयति ॥ मसैच् परिणामे । मसूरो वरधान्यजातिश्चर्मासनं च ॥ पशिः सौत्रः । पश्यते गम्यत इति पशूरो ग्रामः ॥ खट काङ्क्षे । खटूरो मणिविशेषः ॥ खडण् भेदे । खडूरः खुरलीस्थानम् ॥ खर्ज मार्जने च । खर्जूरो वृक्षविशेषः ॥ कर्ज व्यथने । कर्जूरः स एव मलिनश्च ॥ सर्ज अर्जने । सर्जूरोऽहः ॥ कृपौङ् सामर्थ्ये । कर्पूरो गन्धद्रव्यम् ॥ वल्लि संवरणे । वल्लूरो शुष्कमांसम् ॥ मडु भूषायाम् । मण्डूरो धातुविशेषः ॥ ४२७ ॥

महिकणिचण्यणिपल्यलितलिमलिशलिभ्यो णित् ॥ ४२८ ॥

एभ्यो णिदूरः प्रत्ययो भवति ॥ मह पूजायाम् । माहूरः शैलः ॥ कण गतौ । काणूरो नागः ॥ चण हिंसादानयोश्च । चाणूरो मल्लो विष्णुहतः ॥ अण शब्दे । आणूरो ग्रामः ॥ पल गतौ । पालूरं नाम नगरमन्ध्रराज्ये ॥ अली भूषणादौ । आलूरो विटः ॥ तलण् प्रतिष्ठायाम् । तालूरो जलावर्तः ॥ मलि धारणे । मालूरो दानवो बिल्वश्च ॥ शल गतौ । शालूरो दर्दुरः ॥ ४२८ ॥

स्थाविडेः कित् ॥ ४२९ ॥

आभ्यां किदूरः प्रत्ययो भवति ॥ ष्ठां गतिनिवृत्तौ । स्थूरो वठर उक्षश्च । स्थूरा जङ्घाप्रदेशः ॥ विड आक्रोशे । विडूरो बालवाये ग्रामः ॥ ४२९ ॥

सिन्दूरकर्चूरपचूरधुत्तूरादयः ॥ ४३० ॥

एत ऊरप्रत्ययान्ता निपात्यन्ते ॥ स्यन्देः सिन्द् च । सिन्दूरं चीनपिष्टः ॥ करोतेश्चोन्तश्च । कर्चूर औषधविशेषः ॥ पतेस्तोन्तश्च । पचूरं गन्धद्रव्यम् ॥ धुवो द्वित्वकस्तोन्तो ह्रस्वश्च । धुत्तूर उन्मत्तकः । दधातेर्धत्तूरमित्यन्ये ॥ आदिग्रहणात् कस्तूरहारहूरादयो भवन्ति ॥ ४३० ॥

कुगुपतिकथिकुथिकठिकुठिकुटिगडिगुडिमुदिमूलिदंशिभ्यः केरः ॥ ४३१ ॥

एभ्यः किदेरः प्रत्ययो भवति ॥ कुंङ् शब्दे । कुबेरो धनदः ॥ गुंत् पुरीषोत्सर्गे । गुबेरं युद्धम् ॥ पत्लृ गतौ । पतेरः पक्षी पवनश्च ॥ कथण् वाक्यप्रबन्धे । कथेरः कथकः कुहकः शकुन्तश्च ॥ कुथच् पूतिभावे । कुथेरः शिडाकीसंभारः ॥ कठ कृच्छ्रजीवने । कठेरो दरिद्रः ॥ कुठिः सौत्रः । कुठेरो निःसृतसारोर्जकश्च ॥ कुटत् कौटिल्ये । कुटरः शठः ॥ गड सेचने । गडेरो मेघः प्रस्रवणशीलश्च ॥ गुडत् रक्षायाम् । गुडेरो राजा पण्यं च बालभक्ष्यम् ॥ मुदि हर्षे । मुदेरो मूर्खः ॥ मूल प्रतिष्ठायाम् । मूलेरो वनस्पतिः । मूलेरं पण्यम् ॥ दंशं दशने । दशेरः सर्पः सारमेयो जनपदश्च ॥ ४३१ ॥

शतेरादयः ॥ ४३२ ॥

शतेर इत्यादयः शब्दाः केरप्रत्ययान्ता निपात्यन्ते ॥ शद्लृ शातने । तश्च । शतेरो वायुस्तुषारश्च ॥ आदिग्रहणात् गुधेरचुक्कुबेरमालिकेरादयो भवन्ति ॥ ४३२ ॥

कठिचकिसहिभ्य ओरः ॥ ४३३ ॥

एभ्य ओरः प्रत्ययो भवति ॥ कठ कृच्छ्रजीवने । कठोरो मृदुविरुद्धश्च ॥ चक तृप्तौ । चकोरः पक्षिविशेषः पर्वतविशेषश्च ॥ षहि मर्षणे । सहोरो विष्णुः पर्वतश्च ॥ ४३३ ॥

कीरचोरमोरकिशोरघोरहोरादोरादयः ॥ ४३४ ॥

कोर इत्यादयः शब्दा ओरप्रत्ययान्ता निपात्यन्ते ॥ कायतेश्चरतेर्मियतेश्च डिच्च । कोरो बालपुष्पम् ॥ चोरस्तस्करः ॥ मोरो मयूरः ॥ कृशेरिकोपान्त्यस्य । किशोरस्तरुणो बालाश्वश्च ॥ हन्तेर्डित् घश्च । घोरं कष्टम् । हंग् हरणे । होरा निमित्तवादिनां चक्ररेखा ॥ डुदांग्क् दाने । दोंच् छेदने वा । दोरः कटिसूत्रं तन्तुगुणश्च ॥ आदिग्रहणादन्येऽपि ॥ ४३४ ॥

किगॄवृभ्यः करः ॥ ४३५ ॥

एभ्यः करः प्रत्ययो भवति ॥ किः सौत्रः । केकरो वक्रदृष्टिः ॥ शॄश् हिंसायाम् । शर्करा मत्स्यण्डिकादिः कर्कशः क्षुद्रपाषाणावयवश्च ॥ वृग्ट् वरणे । वर्करश्छागशिशुः ॥ ४३५ ॥

सूपुषिभ्यां कित् ॥ ४३६ ॥

आभ्यां कित्करः प्रत्ययो भवति ॥ षूत् प्रेरणे । सूकरो वराहः ॥ पुष पुष्टौ । पुष्करं पद्मं तूर्यमुखं हस्तिहस्ताग्रमाकाशं मुरजस्तीर्थनाम च ॥ ४३६ ॥

अनिकाभ्यां तरः ॥ ४३७ ॥

आभ्यां तरः प्रत्ययो भवति ॥ अनक् प्राणने । अन्तरं बहिर्योगोपसंव्यानयोश्छिद्रमध्यविरहविशेषेषु च ॥ कैं शब्दे । कातरो भीरुः ॥ ४३७ ॥

इण्पूभ्यां कित् ॥ ४३८ ॥

आभ्यां कित्तरः प्रत्ययो भवति ॥ इण्क् गतौ । इतरो निर्दिष्टप्रतियोगी ॥ पूग्श् पवने । पूतरो जलजन्तुः ॥ ४३८ ॥

मीज्यजिमामत्यशौवसिकिभ्यः सरः ॥ ४३९ ॥

एभ्यः सरः प्रत्ययो भवति ॥ मींग्श् हिंसायाम् । मेसरो वर्णविशेषः ॥ जिं अभिभवे । जेसरः शूरः ॥ अज क्षेपणे च । वेसरोऽश्वतरः । वेञ् गतौ । इत्यस्य वा जठरेत्यादिनिपातनाद्वरेरूपम् ॥ मांक् माने । मासर आयामः ॥ मदैच् हर्षे । मत्सरः क्रोधविशेषः ॥ अशौटि व्याप्तौ । अक्षरं वर्णो मोक्षपदमाका-

र्शां च । अक्षेर्वरिरूपम् ॥ वसं निवासे । वत्सरः संवत्सरः परिवत्सरोनुवत्सरो-नुसंवत्सरो निवत्सर उद्वत्सरो वर्षाभिधानानि । इडामानेन वसन्त्यत्र कालाव-यवा इति । इद्वत्सरः । इडया मानेन वसन्त्यत्र वा । इडावत्सरो वर्षविशेषा-भिधाने ॥ परिवत्सरादीन्यपि वर्षविशेषाभिधानानीत्येके ॥ कि इत्यत्रादौ स्मर-न्ति । केसरः सिंहसटः पुष्पावयवो बकुलश्च । बाहुलकान्न सत्वम् ॥ ४३९ ॥

कृधूतन्यृषिभ्यः कित् ॥ ४४० ॥

एभ्यः कित्सरः प्रत्ययो भवति ॥ डुकृंग् करणे । कृसरः कृसरा वा वि-लेपिकाविशेषो वर्णविशेषश्च ॥ धूग् विधूनने । धूसरो भिन्नवर्णो वायुर्धान्यवि-शेषश्च ॥ तनूयी विस्तारे । तसरः कौशेयसूत्रम् ॥ ऋषैत् गतौ । ऋक्षरः कण्टक ऋत्विक् च । ऋक्षरा तोयधारा ॥ ४४० ॥

कृगॄशॄदॄवृग्चतिखटिकटिनिषदिभ्यो वरट् ॥ ४४१ ॥

एभ्यष्टिद्वरः प्रत्ययो भवति ॥ कॄत् विक्षेपे । कर्बरो व्याघ्रो विष्किरोञ्ज-लिश्च । कर्बरी भूमिः शिवा च ॥ गॄत् निगरणे । गर्बरोहंकारो महिषश्च । गर्बरी महिषी संध्या च ॥ शॄश् हिंसायाम् । शर्वरः सायाह्नो रुद्रो हिंस्रश्च । शर्वरं तमोन्नं च । शर्वरी रात्रिः ॥ दॄश् विदारणे । दर्वरं वज्रम् । दर्वरी सेना ॥ वृग्ट् वरणे । बर्बरः कामश्चन्दनं केशविशेषो लुब्धकश्च । बर्बरी नदी भार्या च ॥ चतेग् याचने । चत्वरं चतुष्पथमरण्यं च । चत्वरी रथ्या देवता वेदिश्च ॥ खट काङ्क्षे । खट्वरं रससंकीर्णशाकपाकः ॥ कटे वर्षावरणयोः । कट्वरो व्यालाश्वः ॥ कट्वरी दधिविकारः ॥ षद्लृं विशरणादौ । निपूर्वात् । निषद्वरः कर्दमो वह्निः कर्मकरः कन्दर्प इन्द्रश्च । निषद्वरमासनम् । निषद्वरी प्रपा रात्रिः प्रमदेन्द्राणी च ॥४४१॥

अश्नोतेरीच्चादेः ॥ ४४२ ॥

अशौटि व्याप्तौ । इत्यस्माद्वरट् प्रत्ययो [ भवति ] ईकारश्चादेर्भवति ॥ ईश्वरो विभुः । ईश्वरी स्त्री ॥ ४४२ ॥

नीमीकुतुचेर्दीर्घश्च ॥ ४४३ ॥

एभ्यो वरट् प्रत्ययो [ भवति ] दीर्घश्चैषां भवति ॥ णींग् प्रापणे । नीवरः पुरुषकारः ॥ मींग्श् हिंसायाम् । मीवरो हिंस्रः समुद्रश्च ॥ कुंङ् शब्दे । कू-वरो रथावयवः ॥ तुंक् वृत्त्यादौ । तूवरो अन्नश्मश्रुरजननीकश्च ॥ चिंग्ट् च-यने । चीवरं मुनिजनवासो निःसारकन्था च ॥ ४४३ ॥

तीवरधीवरपीवरछित्वरछत्वरगह्वरोपह्वरसंयद्वरोदुम्बरादयः ॥ ४४४ ॥

एते वरट्प्रत्ययान्ता निपात्यन्ते । तिम्यतेस्ती च तीयतेर्वा । तीवरं जलं व्यञ्जनं च ॥ ध्यायतेर्धी च । धीवरः कैवर्तः ॥ प्यायः प्यैङो वा पी च पीव-तेर्वा किवरः । पीवरो मांसलः ॥ छिनत्तेस्तः किच्च । छित्वरः शठो जर्जरः पि-टकश्च ॥ छादेर्णिलुकि ह्रस्वश्च । छत्वरो निर्भर्त्सको निकुञ्जश्च । छत्वरं कुड्यहीनं गृहं शयनमच्छदरच्छदिश्च ॥ गुहेरचोतः । गह्वरं गहनं महाबिलं भयानकं प्रत्यन्त-देशश्च ॥ उपपूर्वात् ह्वो वादेर्लुक् च । उपह्वरं संधिः समीपं रहःस्थानं च ॥ सम्पूर्वात् यमेर्दश्च । संयद्वरो रणः संयमी नृपश्च ॥ उन्देः किदुम् चान्तः । उदु-म्बरो वृक्षविशेषः ॥ आदिग्रहणात् उम्बरशम्बरादयो भवन्ति ॥ ४४४ ॥

कडेरेवराङ्कुरौ ॥ ४४५ ॥

कडत् मदे । इत्यस्मादेवर अङ्कुर इति प्रत्ययौ भवतः ॥ कडेवरं मृत-शरीरम् । लत्वे । कलेवरम् ॥ कडङ्कुरो वनस्पतिः ॥ ४४५ ॥

त्रट् ॥ ४४६ ॥

सर्वधातुभ्यस्त्रट् प्रत्ययो भवति ॥ छादयतीति छत्त्रं छत्त्री वा घर्मवारणम् ॥ पातीति पात्रमूर्जितगुणाधारः साध्वादिः । पात्री भाजनम् ॥ स्नायतेः । स्नात्रं स्ना-नम् ॥ राजत इति राष्ट्रं देशः ॥ शिष्यतेनेनेति शास्त्रं ग्रन्थः ॥ असूच् क्षेपणे ॥ अस्त्रं धनुः ॥ ४४६ ॥

जिभृसृभ्रस्जिगमिनमिनश्याशिहनिविषेर्वृद्धिश्च ॥ ४४७ ॥

एभ्यस्त्रट् प्रत्ययो [ भवति ] वृद्धिश्चैषां भवति ॥ जि अभिभवे । जैत्रो ज-यनशीलः । जैत्रं द्यूतम् ॥ डुडुभृंग्क् पोषणे च । भार्त्रः पोषो यश्च भृतिं गृहीत्वा वहति ॥ सृं गतौ । सार्त्रमालयः ॥ भ्रस्जीत् पाके । भ्राष्ट्रमम्बरीषम् ॥ गम्लृं गतौ । गान्त्रं मनः शरीरं लोकश्च ॥ णमं प्रह्वत्वे । नान्त्रं शिरः शाखा वैचित्र्यं च ॥ नशौच् अदर्शने । नशो धुटीति नोन्तः । नांष्ट्रा यातुधानाः ॥ अभ्नोतेरभ्रातेर्वा । आष्ट्रमाकाशो रश्मिश्च ॥ हनंक् हिंसागत्योः हान्त्रं रक्षो युद्धं वधश्च ॥ विष्लृंकी व्याप्तौ । वैष्ट्रो विष्णुर्वायुश्च । वैष्ट्रं यकृत्त्रिदिवं वेश्म च ॥ ४४७ ॥

दिवेर्द्यौ च ॥ ४४८ ॥

दीव्यतेस्त्रट् प्रत्ययो [ भवति ] द्यौ चास्यादेशो भवति ॥ द्यौत्रं त्रिदिवं ज्यो-तिर्विमानं प्रमाणं प्रतोदश्च ॥ ४४८ ॥

सृमूखन्युषिभ्यः कित् ॥ ४४९ ॥

एभ्यः किवद् प्रत्ययो भवति ॥ सृत् प्रेरणे । सूत्रं तन्तुः शास्त्रं च ॥ मूङ् बन्धने । मूत्रं प्रस्रावः ॥ खनूग् अवदारणे । खात्रं कुद्दालस्तडागं मामाधानमृ-द्धीरकृतं च छिद्रम् ॥ उषू दाहे । उष्ट्रः क्रमेलकः ॥ ४४९ ॥

स्त्री ॥ ४५० ॥

स्त्यतेः सूतेः स्त्यायतेः स्तृणातेर्वा त्रट् डिच्च । स्त्री योषित् ॥ ४५० ॥

हुयामाश्रुवसिभसिगुवीपचिवचिधृयम्यमिमनितनिसदिछादि-क्षिक्षदिलुपिपतिधूभ्यस्त्रः ॥ ४५१ ॥

एभ्यस्त्रः प्रत्ययो भवति ॥ हुंक् दानादनयोः । होत्रं हवनम् । होत्रा ऋ-चः ॥ यांक् प्रापणे । यात्रा प्रस्थानं यापनमुत्सवश्च ॥ मांक् माने । मात्रा प्रमाणं कालविशेषः स्तोको गणना च ॥ श्रुंट् श्रवणे । श्रोत्रं कर्णः ॥ वसिक् आच्छा-दने । वस्त्रं वासः ॥ भसिं जुहोत्यादौ स्मरन्ति । भस्त्रा चर्ममयमावपनमुदरं च ॥ गुंङ् शब्दे । गोत्रः पर्वतः । गोत्रा पृथ्वी । गोत्रमन्वयः ॥ वींक् प्रजननादौ । वे-त्रं वीरुद्विशेषः ॥ डुपचींष् पाके । पक्त्रं पिठरं गार्हपत्यं च ॥ वचंक् भाषणे । वक्त्रमास्यं छन्दोजातिश्च ॥ धृंङ् स्थाने । धत्रौ धर्मो वृक्षो रविश्च । धत्रं नभो गृहसूत्रं च । धत्रा द्यौः ॥ यमूं उपरमे । यन्त्रं शरीरसंधानमरघट्टादि च । अम गतौ । अन्त्रं पुरीतत् ॥ मनिंच् ज्ञाने । मन्त्रश्छन्दः ॥ तनूयी विस्तारे । तन्त्रं प्रसारितास्तन्तवः शास्त्रं समूहः कुटुम्बं च ॥ षद्लृ विशरणगत्यवसादनेषु । सत्त्रं यज्ञसदो दानं छद्म योगविशेषश्च ॥ छदण् संवरणे । छादयतीति छात्रः शिक्षकः ॥ क्षित् निवासगत्योः । क्षेत्रं कर्षणभूमिर्भार्या शरीरमाकाशं च ॥ क्षदः संवरणे सौत्रः । क्षत्त्रं राजबीजम् ॥ लुप्लृंती छेदने । लोप्त्रमपहृतं द्रव्यम् ॥ पत्लृ गतौ । पत्त्रं पर्णं यानं च ॥ धूग्श् कम्पने । धोत्रं रज्जुः ॥ ४५१ ॥

श्वितेर्वश्च मो वा ॥ ४५२ ॥

श्विताङ् वर्णे । इत्यस्मात्त्रः प्रत्ययो[ भवति ] वकारस्य च मकारो वा भव-ति ॥ श्मेत्रं श्वेत्रं च रोगो ॥ ४५२ ॥

गमेरा च ॥ ४५३ ॥

गम्लृं गतौ । इत्यस्मात्त्रः प्रत्ययो[ भव ]त्याकारश्चान्तादेशो भवति ॥ गात्रं शरीरम् । गात्रा अङ्गावयवः ॥ ४५३ ॥

चिमिदिशंसिभ्यः कित् ॥ ४५४ ॥

एभ्यः क्त्रः प्रत्ययो भवति ॥ चिञ् चयने । चित्रमाश्चर्यमालेख्यं वर्णश्च ॥ ञिमिदाच् स्नेहने । मित्रं सुहृत् । अमित्रः शत्रुः । मित्रः सूर्यः ॥ शंसु स्तुतौ च । शस्त्रं स्तोत्रमायुधं च ॥ ४५४ ॥

पुत्रादयः ॥ ४५५ ॥

पुत्र इत्यादयः शब्दास्त्रप्रत्ययान्ता निपात्यन्ते ॥ पुनाति पवते वा पितृपूर्तिमिति पुत्रः सुतः । यदाहुः । पूतीति नरकस्याख्या दुःखं च नरकं विदुः । पुत्रास्त्रो नरकात्त्रायत इति । व्युत्पत्तिस्तु संज्ञाशब्दानामनेकधा व्याख्यानं लक्षयति ॥ आदिग्रहणादन्येपि ॥ ४५५ ॥

वृञ्नक्षिपचिवच्यमिनमिवमिवपिवधियजिपतिकडिभ्योत्रः ॥ ४५६ ॥

एभ्योत्रः प्रत्ययो भवति ॥ वृञ् वरणे । वरत्रा चर्मरज्जुः ॥ णक्ष गतौ । नक्षत्रमश्विन्यादि ॥ डुपचींष् पाके । पचत्रं रन्धनस्थाली ॥ वचंक् भाषणे । वचत्रं वचनम् ॥ अम गतौ । अमत्रं भाजनम् ॥ णमं प्रह्वत्वे । नमत्रं कर्मारोपकरणम् ॥ टुवमू उद्गिरणे । वमत्रं प्रक्षेपः ॥ डुवपीं बीजसंताने । वपत्रं क्षेत्रम् ॥ वधि बन्धने । वधत्रमायुधं बलं विषं शूरश्च ॥ यजीं देवपूजासंगतिकरणदानेषु । यजत्रो यज्वा । यजत्रमग्निहोत्रम् ॥ पतॢ गतौ । पतत्रं बर्हं वाहनं व्योम च ॥ कडत् मदे । कडत्रं दाराः । लत्वे । कलत्रं दारा जघनं च ॥ ४५६ ॥

सोर्विदः कित् ॥ ४५७ ॥

सुपूर्वात् विदः किदत्रः प्रत्ययो भवति ॥ सुष्ठु वेत्ति विन्दति विद्यते च । सुविदत्रं कुटुम्बं धनं मङ्गलं च ॥ ४५७ ॥

कृतेः कृन्त च ॥ ४५८ ॥

कृतैत् छेदने । इत्यस्मादत्रः प्रत्ययो भवत्यस्य च कृन्त इत्यादेशो [भवति] ॥ कृन्तत्रो मशकः । कृन्तत्रं छेदनं लाङ्गलाग्रं च ॥ ४५८ ॥

बन्धिवहिकटघस्यादिभ्य इत्रः ॥ ४५९ ॥

एभ्य इत्रः प्रत्ययो भवति ॥ बन्धंश् बन्धने । बन्धित्रं मन्थः ॥ वहीं प्रापणे । वहित्रं वाहनं वहनं च ॥ कटे वर्षावरणयोः । कटित्रं लेख्यचर्म ॥ अशौटि व्याप्तौ । अशश् भोजने वा । अशित्रं रश्मिरग्निर्दधिरत्नपानं च ॥ आदिग्रहणात् लुनातेः । लवित्रं कर्मद्रव्यम् ॥ पुनातेः । पवित्रं मङ्गल्यम् ॥ भटतेः । भटित्रं

शूले पक्वमांसम् ॥ कडतेः । कडित्रं कडिश्रमेव ॥ अमतेः । अमित्रो रिपुः ॥ इत्यादिः ॥ ४५९ ॥

भूगृवदिचरिभ्यो णित् ॥ ४६० ॥

एभ्यो णिदित्रः प्रत्ययो भवति ॥ भू सत्तायाम् । भावित्रं त्रैलोक्यं निधानं भर्त्रं च ॥ गृत् निगरणे । गारित्रं मनोजपानमाचार्यश्च ॥ वद व्यक्तायां वाचि । वादित्रमातोद्यम् ॥ चर भक्षणे च । चारित्रं वृत्तं स्थित्यभेदश्च ॥ ४६० ॥

तनितॄलापात्रादिभ्य उत्रः ॥ ४६१ ॥

एभ्य उत्रः प्रत्ययो भवति ॥ तनूयी विस्तारे । तनुत्रं कवचम् ॥ तॄ प्लवनतरणयोः । तरुत्रं प्लवो घासहारी च ॥ लांक् आदाने । लोत्रमपहृतद्रव्यम् ॥ पां पाने । पोत्रं हलसूकरयोर्मुखम् ॥ त्रैङ् पालने । त्रोत्रमभयक्रिया ॥ आदिग्रहणात् वृणोतेः । वरुत्रमभिप्रेतम् ॥ इत्यादयः ॥ ४६१ ॥

शामाश्याशक्यम्ब्यमिभ्यो लः ॥ ४६२ ॥

एभ्यो लः प्रत्ययो भवति ॥ शोंच् तक्षणे । शाला सभा ॥ मांक् माने । माला स्रक् ॥ श्यैङ् गतौ । श्यालः पत्नीभ्राता ॥ शक्लृट् शक्तौ । शक्लो मनोज्ञदर्शनो मधुरवाक् शक्तश्च ॥ अबुङ् शब्दे । अम गतौ । अम्बोम्लश्च रसः ॥ ४६२ ॥

शुकशीमूभ्यः कित् ॥ ४६३ ॥

एभ्यः किल्लः प्रत्ययो भवति ॥ शुक गतौ । शुक्लः सितो वर्णः ॥ शीङ्क् स्वप्ने । शीलं स्वभावो व्रतं धर्मः समाधिश्च ॥ मुङ् बन्धने । मूलं वृक्षपादावयव आदिर्हेतुश्च ॥ ४६३ ॥

भिल्लाच्छभल्लसौविदल्लादयः ॥ ४६४ ॥

भिल्लादयः शब्दाः किल्लप्रत्ययान्ता निपात्यन्ते ॥ भिदेर्लश्च । भिल्लोन्त्यजातिः ॥ अच्छपूर्वात् भलेः । अच्छभल्ल ऋक्षः ॥ सुपूर्वात् विदेरलोन्तः सोश्च वृद्धिः । सौविदल्लः कञ्चुकी ॥ आदिग्रहणात् अल्लपल्लीरल्लादयोपि भवन्ति ॥ ४६४ ॥

मृदिकन्दिकुण्डिमण्डिमङ्गिपटिपाटिशाकिकेवृदेवृकमियमिशल्किकलिपलिगुध्वञ्चिचञ्चिचपिबाहिदिहिकुहितृसृपिशितुसिकुस्यनिभ्रमेरलः ॥ ४६५ ॥

एभ्योलः प्रत्ययो भवति ॥ मृदश् क्षोदे । मर्दलो मुरजः ॥ कदु रोदनाह्वानयोः । कन्दलं प्ररोहः ॥ कुडुङ् दाहे । कुण्डलं कर्णाभरणम् ॥ मकु भूषायाम् ।

मण्डले देशः परिवारश्च ॥ मगु गतौ । मङ्गलं शुभम् ॥ पट गतौ । पटलं छदिः समूह आवपनं नेत्ररोगश्च । ण्यन्तात् । पाटलो वर्णः ॥ शकूंट् शक्तौ । शकलं भिन्नसारं च ॥ केपृङ् सेवने । केवलं परिपूर्णं ज्ञानमसहायं च ॥ देवृङ् देवने । देवल ऋषिर्देवशालः क्रीडनश्च ॥ कमूङ् कान्तौ । कमलं पद्मम् । णिङि । कामलो नेत्ररोगः ॥ यमूं उपरमे । यमलं युग्मम् ॥ शल गतौ । शललं सेधाङ्गरुहशङ्कुः । कलि शब्दसंख्यानयोः । कललं गर्भप्रथमावस्था ॥ पल गतौ । पललं मृष्टतिलान्नसीचूर्णम् ॥ गुंङ् शब्दे । गवलो महिषः ॥ धूगृश् कम्पने । धवलः श्वेतः ॥ अञ्चू गतौ च । अञ्चलो वस्त्रान्तः ॥ चञ्चू गतौ । चञ्चलोऽस्थिरः ॥ चप सान्त्वने । चपलः स एव ॥ वहीं प्रापणे । वहलं सान्द्रम् ॥ दिहींक् लेपे । देहली द्वाराधःपट्टः ॥ कुहणि विस्मापने । कोहलो भरतसूनुः । बाहुलकाद्गुणः ॥ तॄ प्लवनतरणयोः । तरलोऽधीरो हारमध्यमणिश्च ॥ सृं गतौ । सरलोऽकुटिलो वृक्षविशेषश्च ॥ पिशत् अवयवे । पेशलो मनोज्ञः ॥ तुस शब्दे । तोसला जनपदः ॥ कुसच् श्लेषे । कोसला जनपदः ॥ अनक् प्राणने । अनलोऽग्निः ॥ द्रम गतौ । द्रमलं जलम् ॥ ४६५ ॥

नहिलङ्गेर्दीर्घश्च ॥ ४६६ ॥

आभ्यामलः प्रत्ययो [भव]त्यनयोश्च दीर्घो भवति ॥ णहींच् बन्धने । नाहलो म्लेच्छः ॥ लगु गतौ । लाङ्गलं हलम् ॥ ४६६ ॥

ऋजनेर्गोन्तश्च ॥ ४६७ ॥

आभ्यामलः प्रत्ययो [भवति] गकारश्चान्तो भवति ॥ ऋंक् गतौ । अर्गला परिघः ॥ जनैचि प्रादुर्भावे । जङ्गलं निर्जलो देशः ॥ ४६७ ॥

तृपिवपिकुपिकुशिकुटिवृषिमुसिभ्यः कित् ॥ ४६८ ॥

एभ्यः किदलः प्रत्ययो भवति ॥ तृपौच् प्रीतौ । तृपला लता । तृपलं शुष्कपर्णं शुष्कतृणं च ॥ डुवपीं बीजसंताने । उपलः पाषाणः ॥ कुपच् क्रोधे । कुपलः प्रवालः ॥ कुशच् श्लेषणे । कुशलो मेधावी । कुशलमारोग्यम् ॥ कुटत् कौटिल्ये । कुटल ऋषिः ॥ वृषू सेचने । वृषलो दासजातिः ॥ मुसच् खण्डने । मुसलमवहननम् ॥ ४६८ ॥

कोर्वा ॥ ४६९ ॥

कुंङ् शब्दे । इत्यस्मादलः प्रत्ययो [भवति] स च किद्वा भवति ॥ कुवलं बदरम् । कुवली क्षुद्रबदरी ॥ कवलो ग्रासः ॥ ४६९ ॥

शमेर्ब च वा ॥ ४७० ॥

शमूच् उपशमे । इत्यस्मादलः प्रत्ययो [भवति] मकारस्य च बकारो वा भवति ॥ शबलः कल्माषः ॥ शमलं पुरीषं दुरितं च ॥ ४७० ॥

छोर्डग् गादिर्वा ॥ ४७१ ॥

छोंच् छेदने । इत्यस्माड्डिदलः प्रत्ययो [भवति] स च डगादिर्गादिर्वा भवति ॥ छगलश्छागः ॥ छागल ऋषिः ॥ छलं वचनविघातोऽर्थविकल्पोपपत्त्या ॥ ४७१ ॥

मृजिखन्याहनिभ्यो डित् ॥ ४७२ ॥

एभ्यो डिदलः प्रत्ययो भवति ॥ मृजौक् शुद्धौ । मलं बाह्यं रजोऽन्तर्दोषश्च ॥ खनूग् अवदारणे । खलो दुर्जनो निष्पीडितरसं पिण्याकादि । खलं सस्यफलमर्दनभूमिः ॥ हनंक् हिंसागत्योः । आङ्पूर्वः । आहलो विषाणं नखरश्च ॥४७२॥

स्थो वा ॥ ४७३ ॥

तिष्ठतेरलः प्रत्ययो [भवति] स च डिद्वा भवति ॥ स्थलं प्रदेशविशेषः ॥ स्थालं भाजनम् ॥ ४७३ ॥

मुरलोरलविरलकेरलकपिञ्जलकज्जलेज्जलकोमलभृमलसिंहलकाहलशूकलपाकलयुगलभगलविदलकुन्तलोत्पलादयः ॥ ४७४ ॥

एतेऽलप्रत्ययान्ता निपात्यन्ते ॥ मुर्व्युर्व्योर्वलोपः किच्च । मुरला जनपदः ॥ उरल उत्कटः ॥ विपूर्वात् रमेर्डिच्च । विरलोऽसंहतः ॥ किरः केर च । केरला जनपदः ॥ कम्पेरिञ्जोऽन्तो नलोपश्च । कपिञ्जलो गौरतित्तिरः ॥ कचीषोऽजोऽन्तो जश्च । कज्जलं मषी ॥ इज्जलो वृक्षविशेषः ॥ कमेरत ओच्च । कोमलं मृदु ॥ भ्रमेर्भृम् च । भृमलो वायुः कृमिजातिश्च । भृमलं चक्रम् ॥ हिंसेराद्यन्तविपर्ययश्च । सिंहला जनपदः ॥ कणेर्हो दीर्घश्च । काहलोऽव्यक्तवाक् । काहला वाद्यविशेषः ॥ शकेरूच्चास्य । शूकलोऽश्वाधमः ॥ पचेः पाक् च । पाकलो हस्तिज्वरः ॥ युजेः किद्ग च । युगलं युग्मम् ॥ भातेर्गोऽन्तो ह्रस्वश्च । भगलो मुनिः ॥ विन्देर्नलोपश्च । विदलं वेणुदलम् ॥ कनेरत उत्तोऽन्तश्च । कुन्तला जनपदः केशाश्च ॥ उत्पूर्वात् पिबतेर्ह्रस्वश्च । उत्पलं पद्मम् ॥आदिग्रहणात् सुवर्चलामुद्गलपुद्गलादयो भवन्ति॥४७४॥

कृमृतनितमिचषिचपिकपिकीलिपलिबलिपञ्चिमञ्जिगण्डिमण्डिचण्डिलण्डिपिण्डिनन्दिनदिशाकिभ्य आलः ॥४७५ ॥

एभ्य आलः प्रत्ययो भवति ॥ कंक् करौ । करालं वक्रम् ॥ कृंग् करणे ।

करालमुखम् ॥ मृङ् प्राणत्यागे । मरालो हंसो मद्यश्च ॥ वृणूङ् वरणे । वरालो वदान्यः ॥ तमूयी विस्तारे । तनालं जलाशयः ॥ तमूच् काङ्क्षायाम् । तमालो वृक्षो व्यालश्च ॥ चषी भक्षणे । चषालं यूपशिरसि द्रव्यम् ॥ चप सान्त्वने । चपालं वज्रद्रव्यम् ॥ कपिः सौत्रः । कपालं घटावयवः शिरोऽस्थि च ॥ कील बन्धे । कीलालं मद्यं जलमसृक् च ॥ पल गतौ । पलालमकणो व्रीह्यादिः ॥ बल प्राणनधान्यावरोधयोः । बलालो वायुः ॥ पचुङ् व्यक्तीकरणे । पञ्चाल ऋषी राजा च । पञ्चाला जनपदः ॥ मगु गतौ । मङ्गालो देशः ॥ गडु वदनैकदेशे । गण्डालो मत्तहस्ती ॥ मडु भूषायाम् । मण्डाल ऋषिः ॥ चडुङ् कोपे । चण्डालः श्वपचः । अकृतज्ञमकार्यज्ञं दीर्घरोषमनार्जवम् । चतुरो विद्धि चण्डालाञ्जन्मना चेति पञ्चमम् ॥ १ ॥ तडुङ् ताडने । तण्डालः क्षुपः ॥ पिडुङ् संघाते । पिण्डालः कन्दजातिः ॥ टुनदु समृद्धौ । नन्दालो राजा ॥ णद अव्यक्ते शब्दे । नदालो नादवान् ॥ शकृट् शक्तौ । शकाला जनपदो मूर्खधनी च ॥ ४७५ ॥

कुलिपिलिविशिविडिमृणिकुणिपीप्रीभ्यः कित् ॥ ४७६ ॥

एभ्यः किदालः प्रत्ययो भवति ॥ कुल बन्धुसंस्त्यानयोः । कुलालः कुम्भकारः ॥ पिलण् क्षेपे । पिलालं क्षिप्तम् ॥ विशंत् प्रवेशने । विशालं विस्तीर्णम् ॥ विड आक्रोशे । बिडालो मार्जारः । लत्वे । बिलालः स एव ॥ मृणत् हिंसायाम् । मृणालं बिसम् । कुणत् शब्दोपकरणयोः । कुणालः कृतमालः कटविशेषश्च । कुणालं नगरं कठिनं च ॥ पींङ्च् पाने । पियालो वृक्षः । पियालं शाकं बीजं च ॥ प्रींङ्च् प्रीतौ । प्रियालः पियालः ॥ ४७६ ॥

भजेः कगौ च ॥ ४७७ ॥

भजीं सेवायाम् । इत्यस्मात्किदालः प्रत्ययो भवति कगौ चान्तादेशौ भवतः ॥ भकालम् । भगालमुभयं कपालम् ॥ ४७७ ॥

सर्तेर्गोऽन्तश्च ॥ ४७८ ॥

सृं गतौ । इत्यस्मात्किदालः प्रत्ययो भवति गकारोऽन्तश्च [ भवति ॥ ]
सृगालः क्रोष्टा ॥ ४७८ ॥

पतिकृलूभ्यो णित् ॥ ४७९ ॥

एभ्यो णिदालः प्रत्ययो भवति ॥ पत्लृ गतौ । पातालं रसातलम् ॥ डुकृंग् करणे । कारालं लेपद्रव्यम् ॥ लूग्श् छेदने । लावाल बहवाः ॥ ४७९ ॥

वात्वालकङ्कालहिन्तालवेतालजम्बालशब्दालममामालादयः ॥ ४८० ॥

एत आलप्रत्ययान्ता निपात्यन्ते ॥ वतेर्वोन्तो दीर्घश्च । वात्वालो यज्ञगर्तः॥ कचेः स्वरादोन्तः कश्च । कङ्कालः कलेवरम् ॥ हिंसेस्तश्च । हिन्तालो वृक्षविशेषः॥ वियस्तोन्तो गुणश्च । वेतालो रजनीचरविशेषः ॥ जनेर्बोन्तश्च । जम्बालः कर्दमः शैवलं च ॥ शमे[र्क्ते]र्विर्वा शब्दभावश्च । शब्दालः शब्दनशीलः ॥ ममेर्वलोपो मान्तश्चान्तः । ममामालो मतिः स्नेहः पुत्रादिषु स्नेहबन्धनं च ॥ आदिशब्दात् चक्रवालकरवालालशालादयो भवन्ति ॥ ४८० ॥

कल्यनिमहिद्रमिजटिभटिकुटिचण्डिशण्डितुण्डिपिण्डिभू-
कुकिभ्य इलः ॥ ४८१ ॥

एभ्य इलः प्रत्ययो भवति ॥ कलि शब्दसंख्यानयोः । कलिलं गहनं पापमात्माधिष्ठितं च शुक्रार्तवम् ॥ अनक् प्राणने । अनिलो वायुः ॥ मह पूजायाम् । महिला स्त्री ॥ द्रम गतौ । द्रमिलास्तैराज्यवासिनः ॥ जट झट संघाते । जटिलो जटावान् ॥ भट भृतौ । भटिलः श्वा सेवकश्च ॥ कुटन् कौटिल्ये । कुटिलं वक्रम् ॥ चडुङ् कोपे । चण्डिलः श्वा क्रोधनो नापितश्च ॥ शडुङ् रुजायाम् । शण्डिल ऋषिः ॥ तुडुङ् तोडने । तुण्डिलो वाग्जाली ॥ पिडुङ् संघाते । पिण्डिलो मेघो हिंस्रो हिमो गणकश्च ॥ भू सत्तायाम् । भविलो मुनिः समर्थो गृहं बहुनेता च ॥ कुकि आदाने । कोकिलः परभृतः ॥ ४८१ ॥

भण्डेर्नलुक् च वा ॥ ४८२ ॥

भडुङ् परिभाषणे । इत्यस्मादिलः प्रत्ययो भवति नकारस्य च लुग्वा भवति ॥ भडिल ऋषिः पिशाचः शत्रुश्च ॥ भण्डिलः श्वा दूत ऋषिश्च ॥४८२॥

गुपिमिथिधुभ्यः कित् ॥ ४८३ ॥

एभ्यः किदिलः प्रत्ययो भवति ॥ गुपौ रक्षणे । गुपिलं गहनम् ॥ मिथृग् मेधाहिंसयोः । मिथिला नगरी ॥ धुं स्थैर्ये च । धुविल ऋषिः ॥ ४८३ ॥

स्थण्डिलकपिलविचकिलादयः ॥ ४८४ ॥

स्थण्डिलादयः शब्दा इलप्रत्ययान्ता निपात्यन्ते ॥ स्थलेः स्थण्ड् च । स्थण्डिलं व्रतिशयनवेदिका ॥ कबेः प् च । कपिलो वर्ण ऋषिश्च ॥ विचेरकोन्तश्च । विचकिलो मल्लिकाविशेषः ॥ आदिग्रहणात् गोभिलकुम्भिलादयोऽपि भवन्ति ॥ ४८४ ॥

हृषिवृतिचटिपटिशकिशङ्कितण्डिमङ्गुत्कण्ठिभ्य उलः ॥ ४८५ ॥

एभ्य उलः प्रत्ययो भवति ॥ हृषच् तुष्टौ । हृषु अलीके वा । हर्षुलो हर्षवान्कामी मृगश्च । वृतुङ् वर्तने । वर्तुलो वृत्तः ॥ चटण् भेदे । चटुलश्चञ्चलः ॥ पट गतौ । पटुलो वाग्मी ॥ शक्लृट् शक्तौ । शकुलो मत्स्यः ॥ शकुङ् शङ्कायाम् । शङ्कुला क्रीडनशङ्कुर्बन्धनभाण्डमायुधं च ॥ तडुङ् ताडने । तण्डुलो निस्तुषो व्रीह्यादिः ॥ मगु गतौ । मङ्गुलं न्यायापेतम् ॥ कठुङ् शोके । उत्पूर्वः । उत्कण्ठुल उत्कण्ठावान् ॥ ४८५ ॥

स्थावङ्किवंहिविन्दिभ्यः किन्नलुक् च ॥ ४८६ ॥

एभ्यः किदुलः प्रत्ययो [भवति] नकारस्य च लुग्भवति ॥ ष्ठां गतिनिवृत्तौ । स्थुलं पटकुटीविशेषः ॥ वकुङ् कौटिल्ये । वकुलः केसर ऋषिश्च ॥ बहुङ् वृद्धौ । बहुलं प्रचुरम् । बहुलः मासकः कृष्णपक्षश्च । बहुलाः कृत्तिकाः । बहुला गौः ॥ विदु अवयवे । विदुलो वेतसः ॥ ४८६ ॥

कुमुलतुमुलनिचुलवञ्जुलमञ्जुलपृथुलविशंस्थुलाङ्गुलमुकुल-
शष्कुलादयः ॥ ४८७ ॥

एत उलप्रत्ययान्ता निपात्यन्ते ॥ कमितम्योरत उत्वं । कुमुलं कुसुमं हिरण्यं च । कुमुलः शिशुः कान्तश्च ॥ तुमुलं व्यामिश्रयुद्धं संकुलं च ॥ निजेः किच्च । निचुलो बञ्जुलः ॥ वजेः स्वरान्नोऽन्तश्च । वञ्जुलो निचुलः ॥ मञ्जेः सौत्रः । मञ्जुलं मनोज्ञम् ॥ प्रथेः पृथ् च । पृथुलो विस्तीर्णः ॥ विपूर्वात् शंसेः स्थोऽन्तश्च । विशंस्थुलो व्यग्रः ॥ अङ्गेर्गश्च । अङ्गुलमष्टयवप्रमाणम् ॥ मुचेः कित्कश्च । मुकुलमविकसितपुष्पम् ॥ शकेः स्वरात् षोऽन्तश्च । शष्कुली भक्ष्यविशेषः कर्णावयवश्च ॥ आदिग्रहणात् लकुलवल्गुलादयो भवन्ति ॥ ४८७ ॥

पिञ्जिमाञ्जिकण्डिगण्डिबलिवधिवञ्चिभ्य ऊलः ॥ ४८८ ॥

एभ्य ऊलः प्रत्ययो भवति ॥ पिजुण् हिंसाबलदाननिकेतनेषु । पिञ्जूलो हस्तिबंधनपाशो राशिः कुलपतिश्च ॥ माञ्जिः सौत्रः । मञ्जूला मृदुभाषिणी ॥ कडुङ् मदे । कण्डूलोऽशिष्टो जनः ॥ गडु वदनैकदेशे । गण्डूलः कृमिजातिः ॥ बल प्राणनधान्यावरोधयोः । बलूल ऋषिर्भेदो मासश्च ॥ वधि बन्धने । वधूलो हस्ती घातको स्थापनं वधकादश्च ॥ वञ्चिण् प्रलम्भने । वञ्चूलो हस्ती [illegible] च ॥ ४८८ ॥

तमेर्वोन्तो दीर्घस्तु वा ॥ ४८९ ॥

तमूच् काङ्क्षायाम् । इत्यस्मादूलः प्रत्ययो भवति वोन्तश्च भवति दीर्घस्तु वा भवति ॥ ताम्बूलम् । तम्बूलमुभयं पूगपत्रचूर्णसंयोगः ॥ ४८९ ॥

कुलपुलकुसिभ्यः कित् ॥ ४९० ॥

एभ्य ऊलः प्रत्ययो भवति स च किद्भवति ॥ कुल बन्धुसंस्त्यानयोः । कुलूलः कृमिजातिः ॥ पुल महत्त्वे । पुलूलो वृक्षविशेषः ॥ कुसच् श्लेषे । कुसूलः कोष्ठः ॥ ४९० ॥

दुकूलकुकूलबब्बूललाङ्गूलशार्दूलादयः ॥ ४९१ ॥

दुकूलादयः शब्दा ऊलप्रत्ययान्ता निपात्यन्ते ॥ दुकोः कोन्तश्च । दुकूलं क्षौमं वासः ॥ कुकूलं कारीषाग्निः ॥ बधेर्बोन्तो बश्च । बब्बूलो वृक्षविशेषः ॥ लङ्गेर्दीर्घश्च । लाङ्गूलं बालधिः । शृणातेर्दोन्तो वृद्धिश्च । शार्दूलो व्याघ्रः ॥ आदिग्रहणात् मार्जूलकम्बूलादयो भवन्ति ॥ ४९१ ॥

महेरेलः ॥ ४९२ ॥

मह पूजायाम् । इत्यस्मादेलः प्रत्ययो भवति ॥ महेला स्त्री ॥ ४९२ ॥

कटिपटिकण्डिगण्डिशकिकपिचहिभ्य ओलः ॥ ४९३ ॥

एभ्य ओलः प्रत्ययो भवति ॥ कटे वर्षावरणयोः । कटोलः कटविशेषो वादित्रविशेषश्च । कटोलौषधिः ॥ पट गतौ । पटोला वल्लीविशेषः ॥ कडु मदे । कण्डोलो विदलभाजनविशेषः ॥ गडु वदनैकदेशे । गण्डोलः कृमिविशेषः ॥ शकूट् शक्तौ । शकोलः शक्तः ॥ कपिः सौत्रः । कपोलो गण्डः ॥ चह कल्कने । चहोल उपद्रवः ॥ ४९३ ॥

मह्याङ्भ्यः कित् ॥ ४९४ ॥

महेराकारान्तेभ्यश्च धातुभ्यः किदोलः प्रत्ययो भवति ॥ महीङ् उपादाने । गृहोलो बालिशः ॥ कायतेः । कोलो बदरी वराहश्च ॥ गायतेः । गोलो वृत्ताकृतिः । गोला गोदावरी बालरमणकाष्ठं च ॥ पातेः । पोला तालाख्यं कपाटबन्धनं परिखा च ॥ लातेः । लोलश्चपलः ॥ दधातेर्धयतेर्धेतेर्वा । दोला प्रेङ्खणम् ॥४९४॥

पिञ्जोलकल्लोलककोलमक्कोलादयः ॥ ४९५ ॥

पिञ्जोलादयः शब्दा ओलप्रत्ययान्ता निपात्यन्ते ॥ पीडेः पिञ्ज् च । पिञ्जोलो वादित्रविशेषः ॥ कलेर्लोन्तश्च । कल्लोल ऊर्मिः ॥ कचिमच्योः काद्दिः । ककोली लताविशेषः ॥ मक्कोलः सुधाविशेषः ॥ आदिग्रहणादन्येऽपि ॥ ४९५ ॥

वलिपुषेः कल्क् ॥ ४९६ ॥

आभ्यां किल्कलः प्रत्ययो भवति ॥ वलि संवरणे । वल्कलं तरुत्वक् ॥ पुष पुष्टौ । पुष्कलं समग्रं युद्धं शोभनं हिरण्यं धान्यं च ॥ ४९६ ॥

मिगः खलश्चैच्च ॥ ४९७ ॥

डुमिंगृद् प्रक्षेपणे । इत्यस्मात्खलः चकारात्कलश्च प्रत्ययौ भवत एकारश्चान्तादेशो भवति ॥ मेखला गिरिनितम्बो रशना च ॥ मेकलो नर्मदाप्रभवोऽद्रिः ॥ मिग एत्ववचनमात्वबाधनार्थम् ॥ ४९७ ॥

शॄ नोन्तो ह्रस्वश्च ॥ ४९८ ॥

शॄश् हिंसायाम् । इत्यस्मात्खलः प्रत्ययो [ भवति ] नकारोन्तो ह्रस्वश्च भवति ॥ शृङ्खला लोहरज्जुः । शृङ्खलः शृङ्खलं वा ॥ ४९८ ॥

शमिकमिपलिभ्यो बलः ॥ ४९९ ॥

एभ्यो बलः प्रत्ययो भवति ॥ शमूच् उपशमे । शम्बलं पाथेयम् ॥ कमूङ् कान्तौ । कम्बल ऊर्णापटः ॥ पल गतौ । पल्वलमकृत्रिमोदकस्थानविशेषः ॥४९९॥

तुल्वलेल्वलादयः ॥ ६०० ॥

तुल्वलादयः शब्दा वलप्रत्ययान्ता निपात्यन्ते ॥ तुलीलयोर्णिलुग्गुणाभावश्च । तुल्वल ऋषिः । यस्य तौल्वलिः पुत्रः ॥ इल्वलोऽसुरो योगस्त्येन जग्धो मत्स्यो यूपश्च । इल्वलास्तिस्रो मृगशिरःशिरस्ताराः ॥ आदिग्रहणात् शाल्वलादयो भवन्ति ॥ ६०० ॥

शीङस्तलक्पालवालण्वलण्वलाः ॥ ६०१ ॥

शीङ् स्वप्ने । इत्यस्मात्तलक् पाल वालण् वलण् वल इत्येते प्रत्यया भवन्ति ॥ शीतलमनुष्णम् ॥ शेपालम् । जपादित्वात्पस्य वत्वे । शेवालम् । शैवालम् । शैवलम् । शेवलं पञ्चकमपि जलमलवाचि ॥ ६०१ ॥

रुचिकुटिकुषिकशिशालिद्रुभ्यो मलक् ॥ ६०२ ॥

एभ्यः किन्मलः प्रत्ययो भवति ॥ रुचि अभिप्रीत्याम् । रुक्मलं सुवर्णम् । न्यङ्क्वादित्वात्कत्वम् ॥ कुटत् कौटिल्ये । कुड्मलं मुकुलम् ॥ कुषश् निष्कर्षे । कुष्मलं तदेव बिलं च ॥ कश शब्दे । कश्मलं मलिनम् ॥ शाडृङ् श्लाघायाम् । लत्वे । शाल्मलो वृक्षविशेषः ॥ द्रु गतौ । द्रुमलं वनं जलं च ॥ ६०२ ॥

## कुशिकमिभ्यां कुल्कुमौ च ॥ ५०३ ॥

आभ्यां मलक् प्रत्ययो भवत्यनयोश्च यथासंख्यं कुल् कुम् इत्यादेशौ भवतः ॥ कुशच् श्लेषणे । कुल्मलं छेदनम् ॥ कमूङ् कान्तौ । कुम्मलं पद्मम् ॥५०३॥

## पतेः सलः ॥ ५०४ ॥

पत्लृ गतौ । इत्यस्मात्सलः प्रत्ययो भवति ॥ पत्सलः प्रहारो गोमानाहारश्च ॥ ५०४ ॥

## लटिखटिखलिनलिकण्यशौसृगॄकॄगॄदॄपॄशापिश्याशालापदिह्रसीणभ्यो वः ॥ ५०५ ॥

एभ्यो वः प्रत्ययो भवति ॥ लट बाल्ये । लट्वा क्षुद्रचटका कुसुम्भं च ॥ खट काङ्क्षे । खट्वा शयनयन्त्रम् ॥ खल संचये च । खल्वं निम्नं खलीनं च ॥ खल्वा वृतिः ॥ णल गन्धे । नल्वो भूमानविशेषः ॥ कण शब्दे । कण्व ऋषिः । कण्वं पापम् ॥ अशौटि व्याप्तौ । अश्वस्तुरंगः ॥ सृं गतौ । सर्वः शम्भुः सर्वादि च कृत्स्नार्थे ॥ शॄश् हिंसायाम् । शर्वः शम्भुः ॥ कॄत् विक्षेपे । कर्व आखुः समुद्रो निष्पत्तिक्षेत्रं च ॥ गॄत् निगरणे । गर्वोऽहंकारः ॥ दॄश् विदारणे । दर्वा जनपदः । दर्वो हिंस्रः ॥ पॄश् पालनपूरणयोः । पर्वो रुद्रः काण्डं च ॥ शापीं आक्रोशे । शप्व आक्रोशः ॥ श्यैङ् गतौ । श्यावो वर्णः ॥ शोंच् तक्षणे । शावस्तिर्यग्बालः ॥ लांक् आदाने । लावः पक्षिजातिः ॥ पदिच् गतौ । पद्वो रथो वायुर्भूर्लोकश्च ॥ ह्रस शब्दे । ह्रस्वो लघुः ॥ इणक् गतौ । एवः केवलः । एवेत्यवधारणे निपातश्च ॥ ५०५ ॥

## शीङापो ह्रस्वश्च वा ॥ ५०६ ॥

आभ्यां वः प्रत्ययो [भवति] ह्रस्वश्च वा भवति ॥ शीङ्क् स्वप्ने । शिवं क्षेमं सुखं मोक्षपदं च । शिवा हरीतकी । शेवं धनम् । शेवोऽजगरः सुखकृच्च । शेवा प्रबलनिद्राविशेषो मेण्ढ्रश्च ॥ आप्लृट् व्याप्तौ । अप्वा देवायुधम् । आप्वा वायुः ॥ ५०६ ॥

## उर्देर्ध च ॥ ५०७ ॥

उर्दि मानक्रीडनयोश्च । इत्यस्माद्वः प्रत्ययो भवति धकारश्चान्तादेशो भवति ॥ ऊर्ध्वं ऊर्ध्वमा । ऊर्ध्वमुपरि पुरस्ताच्च ॥ ५०७ ॥

गन्धेरर् वान्तः ॥ ५०८ ॥

गन्धिण् अर्दने । इत्यस्मादः प्रत्ययो [भव]त्यर् वान्तो भवति ॥ गन्धर्वो गायको देवविशेषश्च ॥ ५०८ ॥

लषेर्लिप् च वा ॥ ५०९ ॥

लषी कान्तौ । इत्यस्मादः प्रत्ययो [भव]त्यस्य च लिप् इत्यादेशो वा भवति ॥ लिप्वो लम्पटः कान्तो दयितश्च ॥ लप्वोपत्यमृषिस्थानं च ॥ ५०९ ॥

सर्लणिद्वा ॥ ५१० ॥

सल गतौ । इत्यस्मादः प्रत्ययो [भवति] स च णिद्वा भवति ॥ साल्वाः सल्वाश्च जनपदः क्षत्रिय[ा]श्च ॥ ५१० ॥

निघृषीष्यृषिस्रुपुषिकिणिविशिबिल्यविपृभ्यः कित् ॥ ५११ ॥

एभ्यः किद्वः प्रत्ययो भवति ॥ घृषू संहर्षे । निपूर्वः । निघृष्वोनुकूलः सुवर्णनिकषोपलो वायुः क्षुरश्च ॥ इषत् इच्छायाम् । इष्वोभिलषित आचार्यश्च । इष्वापत्यसंततिः ॥ ऋषैत् गतौ । ऋष्वो रिपुर्हिंस्रश्च । रिषेर्व्यञ्जनादेः केचिदिच्छन्ति । रिष्वः ॥ स्रुं गतौ । स्रुवो हवनभाण्डम् ॥ पुषू दाहे । पुष्वा निवृत्तिर्जललवश्च ॥ किणः सौत्रः । किण्वं सुराबीजम् ॥ विशंत् प्रवेशने । विश्वं जगत्सर्वादि च ॥ बिलत् भेदने । बिल्वो मालूरः ॥ अव रक्षणादौ । अवेत्यव्ययम् ॥ पृश् पालनपूरणयोः । पूर्वो दिक्कालनिमित्तः ॥ ५११ ॥

नञो भुवो डित् ॥ ५१२ ॥

नञ्पूर्वात् भवतेर्डिद्वः प्रत्ययो भवति ॥ अभ्वमद्भुतम् ॥ ५१२ ॥

लिहेर्जिह् च ॥ ५१३ ॥

लिहींक् आस्वादने । इत्यस्मादः प्रत्ययो भवत्यस्य च जिह् इत्यादेशो भवति ॥ जिह्वा रसना ॥ ५१३ ॥

प्रह्वाह्वायह्वास्वच्छेवाग्रीवामीवाम्बादयः ॥ ५१४ ॥

प्रह्वादयः शब्दा वप्रत्ययान्ता निपात्यन्ते ॥ प्रपूर्वस्य ह्वयतेर्वादेर्लोपो यतेर्वा हादेशश्च । प्रह्वः प्रणतः ॥ आह्वयतेराह् च । आह्वा कण्ठः ॥ यमेर्यसेर्वा ह् च । यह्वा बुद्धिः ॥ अस्यतेरलोपश्च । स्व आत्मात्मीयं ज्ञातिर्धनं च ॥ छ्यतेश्छिदेर्वा छेभावश्च । छेवोच्छित्तिः ॥ ग्रन्थतेर्गिरतेर्वा ग्रीभावश्च । ग्रीवा ॥ अमेरीकारान्तो दीर्घश्च वा । अमीवा बुभुक्षा । आमीवा व्याधिः ॥ मिनोतेर्दीर्घश्च । मीवा

मन उदकं च । तदेतत्त्रयमपि तन्त्रेणावृत्त्या वा निर्दिष्टम् ॥ अवतेर्वलोपाभावश्च । अम्बा माता ॥ आदिशब्दात् ध्वादयो भवन्ति ॥ ५१४ ॥

वडिवटिपेलृचणिपणिपल्लिवल्लेरवः ॥ ५१५ ॥

एभ्योवः प्रत्ययो भवति ॥ वड आग्रहणे सौत्रः । वडवाश्वा ॥ वट वेष्टने । वटवा सैव ॥ पेलृ गतौ । पेलवं निःसारम् ॥ चण हिंसादानयोश्च । चणवोवरधान्यजातिः ॥ पणि व्यवहारस्तुत्योः । पणवो वाद्यजातिः ॥ पल्ल गतौ । पल्लवं किसलयम् ॥ वल्लि संवरणे । वल्लवो गोपः ॥ ५१५ ॥

मणिवसेर्णित् ॥ ५१६ ॥

आभ्यां णिदवः प्रत्ययो भवति ॥ मण शब्दे । माणवः शिष्यः ॥ वसं निवासे । वासवः शक्रः ॥ ५१६ ॥

मलेर्वा ॥ ५१७ ॥

मलि धारणे । इत्यस्मादवः प्रत्ययो [भवति] स च णिद्वा भवति । मालवा जनपदः ॥ मलवो दानवः ॥ ५१७ ॥

कितिकुडिकुरिमुरिस्थाभ्यः कित् ॥ ५१८ ॥

एभ्यः किदवः प्रत्ययो भवति ॥ कित निवासे । कितवो द्यूतकारः ॥ कुडत् बाल्ये च । कुडवो मानम् । लत्वे । कुलवः स एव नालीद्वयं च ॥ कुरत् शब्दे । कुरवः पुष्पवृक्षजातिः ॥ मुरत् संवेष्टने । मुरवो मानविशेषो वाद्यजातिश्च ॥ ष्ठां गतिनिवृत्तौ । स्थवोजावृषः ॥ ५१८ ॥

कैरवभैरवमुत्वकारण्डवादीनवादयः ॥ ५१९ ॥

कैरवादयः शब्दा अवप्रत्ययान्ता निपात्यन्ते । कृग्भृगोः कैरभैरौ च । कैरवं कुमुदम् ॥ भैरवो भर्गो भयानकश्च ॥ मिनोतेर्मुत् च । मुतवो मानविशेषः ॥ कृगोण्डोन्तो वृद्धिश्च । कारण्डवो जलपक्षी ॥ आङ्पूर्वात् दीङो नोन्तश्च । आदीनवो दोषः ॥ आदिग्रहणात् कोद्रवकोटवादयोपि भवन्ति ॥ ५१९ ॥

गृणातेराव: ॥ ५२० ॥

गृश् हिंसायाम् । इत्यस्मादावः प्रत्ययो भवति ॥ गरावो मल्लकः ॥ ५२० ॥

प्रथेरिवट् पृथ् च ॥ ५२१ ॥

प्रथिष् प्रख्याने । इत्यस्मादिवट् प्रत्ययो [भव]त्यस्य च पृथ् इत्यादेशो भवति ॥ पृथिवी भूः ॥ ५२१ ॥

पलिसचेरिवः ॥ ६२२ ॥

पलण् रक्षणे । षचि सेचने । इत्याभ्यामिवः प्रत्ययो भवति ॥ पलिवो गोप्ता ॥ सचिवः सहायः ॥ ६२२ ॥

स्पृशेः श्वः पार् च ॥ ६२३ ॥

स्पृशंत् संस्पर्शे । इत्यस्मात् श्वः प्रत्ययो [भव]त्यस्य च पार् इत्यादेशो भवति ॥ पार्श्वं स्वाङ्गं समीपं च । पार्श्वो भगवांस्तीर्थकरः ॥ ६२३ ॥

कुडितुड्यडेरुवः ॥ ६२४ ॥

एभ्य उवः प्रत्ययो भवति ॥ कुडत् बाल्ये च । कुडुवं प्रसृतं हस्तमानं च ॥ तुडत् तोडने । तुडुवमर्पनेयद्रव्यम् ॥ अड उद्यमे । अडुवः प्लवः॥६२४॥

नीह्विण्ध्यैप्यापादामाभ्यस्त्वः ॥ ६२५ ॥

एभ्यस्त्वः प्रत्ययो भवति ॥ णींग् प्रापणे । नेत्वं द्यावापृथिव्यौ चन्द्रश्च ॥ हुंक् दानादनयोः । होत्वं यजमानः समुद्रश्च ॥ इण्क् गतौ । एत्वं गमनपरम् ॥ ध्यैं चिन्तायाम् । ध्यात्वं ब्राह्मणः ॥ प्यैंङ् वृद्धौ । प्यात्वं ब्राह्मणः समुद्रो नेत्रं च ॥ पां पाने । पात्वं पात्रम् ॥ डुदांग्क् दाने । दात्व आयुक्तो यज्वा यज्ञश्च ॥ मांक् माने । मात्वं प्रमेयद्रव्यम् ॥ ६२५ ॥

कृजन्येधिपाभ्य इत्वः ॥ ६२६ ॥

एभ्य इत्वः प्रत्ययो भवति ॥ डुकृंग् करणे । करित्वः करणशीलः ॥ जनैचि प्रादुर्भावे । जनित्वो लोको मातापितरौ द्यावापृथिव्यौ च । जनित्वं कुलम् ॥ एधि वृद्धौ । एधित्वोग्निः समुद्रः शैलश्च ॥ पां पाने । पेत्वं तप्तभूमिप्रदेशोमृतं नेत्रं सुखं मानं च ॥ ६२६ ॥

पादावम्यमिभ्यः शः ॥ ६२७ ॥

एभ्यः शः प्रत्ययो भवति ॥ पांक् रक्षणे । पाशो बन्धनम् ॥ डुदांग्क् दाने । दाशः कैवर्तः ॥ टुवमू उद्गिरणे । वंशो वेणुः ॥ अम गतौ । अंशो भागः ॥ ६२७ ॥

कृवृभृवनिभ्यः कित् ॥ ६२८ ॥

एभ्यः कित् शः प्रत्ययो भवति ॥ डुकृंग् करणे । कृशस्तनुः ॥ वृग्ट् वरणे । वृशं शृङ्गवेरं मूलकं लशुनं च ॥ डुभृंग्क् पोषणे च । भृशमत्यर्थम् ॥ वन भक्तौ । वश आयत्तः ॥ ६२८ ॥

कौर्वा ॥ ५२९ ॥

कुङ् शब्दे । इत्यस्मात् शः प्रत्ययो [भवति] स च किद्वा भवति ॥ कुशो दर्भः ॥ कोशः सारं कुड्मलं च ॥ ५२९ ॥

क्लिशः के च ॥ ५३० ॥

क्लिशौश् विबाधने । इत्यस्मात् शः प्रत्ययो [भव]त्यस्य च के इत्यादेशो भवति ॥ केशा मूर्धजाः ॥ ५३० ॥

उरेरशक् ॥ ५३१ ॥

उर गतौ । इत्यस्मात्सौत्रादशक् प्रत्ययो भवति ॥ उरश ऋषिः ॥५३१॥

कलेष्टित् ॥ ५३२ ॥

कलि शब्दसंख्यानयोः । इत्यस्माट्टिदशक् प्रत्ययो भवति ॥ कलशः कुम्भः । कलशी दधिमन्थनभाजनम् ॥ ५३२ ॥

पलेराशः ॥ ५३३ ॥

पल गतौ । इत्यस्मादाशः प्रत्ययो भवति ॥ पलाशो ब्रह्मवृक्षः ॥५३३ ॥

कनेरीश्चातः ॥ ५३४ ॥

कनै दीप्त्यादौ । इत्यस्मादाशः प्रत्ययो [भवति] ईकारश्चाकारस्य भवति ॥ कीनाशः कर्षको वर्णसंकरः कदर्यश्च । तथा । लुब्धः कीनाशः स्यात्कीनाशोऽप्युच्यते कृतघ्नश्च । योऽभात्यामं मांसं स च कीनाशो यमश्चैव ॥ १ ॥ ५३४ ॥

कुलिकनिकणिपलिवडिभ्यः किशः ॥ ५३५ ॥

एभ्यः किदिशः प्रत्ययो भवति ॥ कुल बन्धुसंस्त्यानयोः । कुलिशं वज्रम् । कनै दीप्त्यादौ । कण शब्दे । कनिशं कणिशं च सस्यमञ्जरी ॥ पल गतौ । पलिशं यत्र स्थित्वा मृगा व्यापाद्यन्ते ॥ वड आग्रहणे सौत्रः । वडिशं मत्स्यग्रहणम् ॥ ५३५ ॥

बलेर्णिद्वा ॥ ५३६ ॥

बल प्राणनधान्यावरोधयोः । इत्यस्मात्किशः प्रत्ययो [भवति] स च णिद्वा भवति ॥ बालिशो मूर्खः ॥ बलिशं वडिशम् ॥ ५३६ ॥

तिनिशेतिशादयः ॥ ५३७ ॥

तिनिशादयः शब्दाः किशप्रत्ययान्ता निपात्यन्ते ॥ तनेरिच्चातः । तिनिशो वृक्षः ॥ हणस्तोऽन्तश्च । हतिशो गोत्रकृदपि ॥ आदिग्रहणादन्येऽपि ॥ ५३७ ॥

मस्त्यङ्किभ्यामुशः ॥ ५३८ ॥

आभ्यामुशः प्रत्ययो भवति ॥ टुमस्जोंत् शुद्धौ । न्यङ्क्वादित्वाद्गत्वम् । मद्गुशो नकुलः ॥ अकुङ् लक्षणे । अङ्कुशः सृणिः ॥ ५३८ ॥

अर्तीण्भ्यां पिशतशौ ॥ ५३९ ॥

आभ्यां यथासंख्यं पिश तश इत्येतौ प्रत्ययौ भवतः ॥ ऋक् गतौ । अर्पिशमार्द्रमांसं बालवत्साया दुग्धं च ॥ इण्क् गतौ । एतशोश्व ऋषिर्वायुरग्निरर्कश्च ॥ ५३९ ॥

वृकृतॄमीङ्माभ्यः षः ॥ ५४० ॥

एभ्यः षः प्रत्ययो भवति ॥ वृग्ट् वरणे । वर्षो भर्ता । वर्षं संवत्सरः। वर्षा ऋतुः ॥ कृत् विक्षेपे । कर्ष उन्मानविशेषः ॥ तॄ प्लवनतरणयोः । तर्षः प्लवो हर्षश्च ॥ मींङ्च् हिंसायाम् । मेष उरभ्रः ॥ मांक् माने । माषो धान्यविशेषो हेमपरिमाणं च ॥ ५४० ॥

योरूच्च वा ॥ ५४१ ॥

युक् मिश्रणे । इत्यस्मात् षः प्रत्ययो [भव] त्यूकारश्चान्तादेशो वा भवति ॥ यूषः पेयविशेषः । यूषा छाया । योषा स्त्री ॥ ५४१ ॥

स्नुपूमुम्वर्कलूभ्यः कित् ॥ ५४२ ॥

स्न्वादिभ्योर्कपूर्वाच्च लुनातेः कित् षः प्रत्ययो भवति ॥ स्नुक् प्रस्नवने । स्नुषा पुत्रवधूः ॥ पूग्श् पवने । पूषः पवनभाण्डं शूर्पादिः ॥ षूत् प्रेरणे । सूषो बलम् ॥ मूङ् बन्धने । मूषा लोहरक्षणभाजनम् ॥ लूग्श् छेदने । अर्कपूर्वः । अर्कलूषः ऋषिः ॥ ५४२ ॥

श्लिषेः शे च ॥ ५४३ ॥

श्लिषंच् आलिङ्गने । इत्यस्मात् षः प्रत्ययो [भव] त्यस्य च शे इत्यादेशो भवति ॥ शेषो नागराजः ॥ ५४३ ॥

कोरषः ॥ ५४४ ॥

कुंङ् शब्दे । इत्यस्मादषः प्रत्ययो भवति ॥ कवषः क्रोधी शब्दकारश्च ॥ ५४४ ॥

युजलेरापः ॥ ५४५ ॥

आभ्यामापः प्रत्ययो भवति ॥ युक् मिश्रणे । यवापो दुरालभा ॥ जल घात्ये । जलापं जलम् ॥ ५४५ ॥

## अर्तेरिषः ॥ ५४६ ॥

ऋक् गतौ । इत्यस्माण्ण्यन्तादिषः प्रत्ययो भवति ॥ अर्पिषमार्द्रमांसम् ॥ ५४६ ॥

## मह्यविभ्यां टित् ॥ ५४७ ॥

आभ्यां टिदिषः प्रत्ययो भवति ॥ मह पूजायाम् । महिषः सैरिभो राजा च । महिषी राजपत्नी सैरिभी च ॥ अव रक्षणादौ । अविषः समुद्रो राजा पर्वतश्च । अविषी द्यौर्भूमिर्गङ्गा च ॥ ५४७ ॥

## रुहेर्वृद्धिश्च ॥ ५४८ ॥

रुहं जन्मनि । इत्यस्माट्टिदिषः प्रत्ययो [भवति] वृद्धिश्चास्य भवति ॥ रौहिषं तृणविशेषोन्तरिक्षं च । रौहिषो मृगः । रौहिषी वात्या मृगी दूर्वा च ॥ ५४८ ॥

## अभिमृभ्यां णित् ॥ ५४९ ॥

आभ्यामिषः प्रत्ययो भवति स च णित् [भवति ॥] अम गतौ । आमिषं भक्ष्यम् ॥ मृश् हिंसायाम् । मारिषो हिंस्रः ॥ ५४९ ॥

## तवेर्वा ॥ ५५० ॥

तव गतौ ॥ इत्यस्मात्सौत्राट्टिदिषः प्रत्ययो [ भवति ] स च णिद्वा भवति ॥ ताविषस्तविषश्च स्वर्गः ॥ ताविषं तविषं च बलं तेजश्च ॥ ताविषी तविषी च वात्या देवकन्या च ॥ ५५० ॥

## कलेः किल्व च ॥ ५५१ ॥

कलि शब्दसंख्यानयोः । इत्यस्माट्टिदिषः प्रत्ययो [ भव]त्यस्य च किल्व इत्यादेशो भवति ॥ किल्विषं पापम् । किल्विषी वेश्या रात्रिः पिशाची च ॥ ५५१ ॥

## नञो व्यथेः ॥ ५५२ ॥

नञ्पूर्वात् व्यथिष् भयचलनयोः । इत्यस्माट्टिदिषः प्रत्ययोभवति ॥ अव्यथिषः क्षेत्रज्ञः सूर्योग्निश्च । अव्यथिषी पृथिवी ॥ ५५२ ॥

## कृतृभ्यामीषः ॥ ५५३ ॥

आभ्यामीषः प्रत्ययो भवति ॥ कृत् विक्षेपे । करीषः शुष्कगोमयरजः ॥ तॄ प्लवनतरणयोः । तरीषः समर्थः स्तम्भः प्लवश्च ॥ ५५३ ॥

ऋजिशृपृभ्यः कित् ॥ ५५४ ॥

एभ्यः किदीषः प्रत्ययो भवति ॥ ऋजि गत्यादौ । ऋजीषं धनम् । ऋजीषोवस्करः ॥ शॄश् हिंसायाम् । शिरीषो वृक्षः ॥ पॄश् पालनपूरणयोः । पुरीषं शकृत् ॥ ५५४ ॥

अमेर्बरादिः ॥ ५५५ ॥

अम गतौ । इत्यस्माद्बरादिरीषः प्रत्ययो भवति ॥ अम्बरीषं भ्राष्ट्रं व्योम च । अम्बरीष आदिनृपः ॥ ५५५ ॥

उषेर्णोन्तश्च ॥ ५५६ ॥

उषू दाहे । इत्यस्मादीषः प्रत्ययो [भवति] णकारश्चान्तो भवति ॥ उष्णीषो मुकुटं शिरोवेष्टनं च ॥ ५५६ ॥

ऋपॄनहिहनिकलिचलिचपिवपिकृपिहयिभ्य उषः ॥ ५५७ ॥

एभ्य उषः प्रत्ययो भवति ॥ ऋश् गतौ । अरुषो व्रणो हय आदित्यो वर्णो रोषश्च ॥ पॄश् पालनपूरणयोः । परुषः कर्कशः ॥ णहींच् बन्धने । नहुषः पूर्वो राजा ॥ हनंक् हिंसागत्योः । हनुषः क्रोधो राक्षसश्च ॥ कलि शब्दसंख्यानयोः । कलुषमप्रसन्नं पापं च ॥ चल कम्पने । चलुषो वायुः ॥ चप सान्त्वने । चपुषः शकुनिः ॥ डुवपीं बीजसंताने । वपुषो वर्णः ॥ कृपौङ् सामर्थ्ये । कल्पुषः क्रियानुगुणः ॥ हय क्रान्तौ च । हयुषौषधिः ॥ ५५७ ॥

विदिपॄभ्यां कित् ॥ ५५८ ॥

आभ्यां किदुषः प्रत्ययो भवति ॥ विदक् ज्ञाने । विदुषो विद्वान् ॥ पॄश् पालनपूरणयोः । पुरुषः पुमानात्मा च ॥ ५५८ ॥

अपुषधनुषादयः ॥ ५५९ ॥

अपुषादयः शब्दा उषप्रत्ययान्ता निपात्यन्ते ॥ आप्नोतेर्ह्रस्वश्च । अपुषोग्निः सरोगश्च ॥ दधातेर्धन् च । धनुषः शैलः ॥ आदिग्रहणात् लक्षुषादयोपि ॥५५९॥

खलिफलिवृपृकृजूलम्बिमञ्जिपीयिहन्यञ्जिमाञ्जि-
गण्डर्तिभ्य ऊषः ॥ ५६० ॥

एभ्य ऊषः प्रत्ययो भवति ॥ खल संचये च । खलूषो म्लेच्छजातिः ॥ फल निष्पत्तौ । फलूषो वीरुत् ॥ वृगट् वरणे । वरूषो भाजनम् ॥ पॄश् पालनपूरणयोः । परूषो वृक्षविशेषः ॥ कृत् विक्षेपे । करूषा जनपदः ॥ जॄष्च् जरसि । जरूष आदित्यः ॥ लबुङ् अवस्रंसने च । लम्बूषो नीरकदम्बो निचुलश्च । मञ्जिः पीयिश्च

सौत्री ॥ मञ्जूषा काष्ठकोष्ठः॥ पीयूषं प्रत्यग्रप्रसवक्षीरविकारोमृतं घृतं च ॥ हनंक् हिंसागत्योः । हनूषो राक्षसः ॥ अगु गतौ । अङ्गूषः शाकुनिजातिर्हस्ती बाणो वेगश्च ॥ मगु गतौ । मङ्गूषो जलचरशकुनिः ॥ गडु वदनैकदेशे । गण्डूषो द्रवकवलः ॥ ऋक् गतौ । अरूषो रविः ॥ ५६० ॥

कोरदूषाटरूषकारूषशैलूषपिञ्जूषादयः ॥ ५६१ ॥

एत ऊषप्रत्ययान्ता निपात्यन्ते ॥ कुरेरदोन्तश्च । कोरदूषः कोद्रवः ॥ आटेररोन्तश्च । आटरूषो वासा । अटनं रूषतीत्यटरूष इति तु पृषोदरादिः ॥ कृगो वृद्धिश्च । कारूषा जनपदः ॥ शलेरैं चातः । शैलूषो नटः ॥ पिजुण् हिंसादौ । पिञ्जूषः कर्णशष्कुल्याभोगः ॥ आदिशब्दात् प्रत्युषाभ्यूषादयो भवन्ति ॥ ५६१ ॥

कल्मेर्मषः ॥ ५६२ ॥

कलि शब्दसंख्यानयोः । इत्यस्मान्मषः प्रत्ययो भवति ॥ कल्मषं पापम् ॥ ५६२ ॥

कुलेश्च माषक् ॥ ५६३ ॥

कुल बन्धुसंस्त्यानयोः । इत्यस्मात्कलेश्च किन्माषः प्रत्ययो भवति ॥ कुल्माषोर्धस्विन्नं माषादि ॥ कल्माषः शबलः ॥ ५६३ ॥

मावावद्यमिकमिहनिमानिकष्यशिपचिमुचियजिवृतृभ्यः सः ॥५६४॥

एभ्यः सः प्रत्ययो भवति ॥ मांक् माने । मासस्त्रिंशद्रात्रः ॥ वांक् गतिगन्धनयोः । वासा । आटरूषः ॥ वद व्यक्तायां वाचि । वत्सस्तर्णक ऋषिः प्रियस्य च पुत्रस्याख्यानम् ॥ अम गतौ । अंसो भुजशिखरम् ॥ कमूङ् कान्तौ । कंसो लोहजातिर्विष्णोरारातिर्हिरण्यमानं च ॥ हनंक् हिंसागत्योः । हंसःश्वेतच्छदः ॥ मानि पूजायाम् । मांसं तृतीयो धातुः ॥ कष हिंसायाम् । कक्षस्तृणगहनारण्यं शरीरावयवश्च ॥ अशौटि व्याप्तौ । अक्षाः पासकाः । अक्षाणीन्द्रियाणि रथचक्राणि च ॥ डुपचींष् पाके । पक्षोर्धमासो वर्गः शकुन्यवयवः सहायः साध्यं च ॥ मुच्लृतीमोक्षणे । मोक्षो मुक्तिः ॥ यजीं देवपूजादौ । यक्षो गुह्यकः ॥ वृग्ट् वरणे । वर्सो देशः समुद्रश्च ॥ तॄ प्लवनतरणयोः । तर्सो वीतंसः सूर्यश्च ॥ वर्सतर्सयोर्बाहुलकान्न षत्वम् ॥ ५६४ ॥

व्यवाभ्यां तनेरीच्च वेः ॥ ५६५ ॥

वि अव इत्येताभ्यां परात्तनोतेः सः प्रत्ययो [ भवति ]वेरीकारश्चान्तादेशो भवति ॥ वीतंसः शकुन्यवरोधः ॥ अवतंसः कर्णपूरः ॥ ५६५ ॥

प्लुषेः प्लष् च ॥ ५६६ ॥

प्लुषु दाहे। इत्यस्मात्सः प्रत्ययो [भवति] तस्य च प्लष् इत्यादेशो भवति ॥ प्लक्षो नक्षत्रं वृक्षश्च ॥ ५६६ ॥

ऋजिरिषिकुषिकृतिव्रश्च्युन्दिशॄभ्यः कित् ॥ ५६७ ॥

एभ्यः कित्सः प्रत्ययो भवति ॥ ऋजि गत्यादौ। ऋक्षं नक्षत्रम्। ऋक्षोच्छ-भल्लः ॥ रिष हिंसायाम्। रिक्षा यूकाण्डम्। लत्वे। लिक्षा सैव ॥ कुषश् निष्कर्षे। कुक्षो गर्भः। कुक्षं गर्तः ॥ कृतैत् छेदने। कृत्सो गोत्रकृदोदनं वक्त्रं दुःखजातं च ॥ ओव्रश्चौत् छेदने। वृक्षः पादपः ॥ उन्दैप् क्लेदने। उत्सः समुद्र आकाशं जलं जलाशयश्च। उत्सं स्रोतः ॥ शॄश् हिंसायाम्। शीर्षं शिरः ॥ ५६७ ॥

गुधिगृधेस्त च ॥ ५६८ ॥

आभ्यां कित्सः प्रत्ययो [भवति] तकारश्चान्तादेशो भवति ॥ गुधच् परिवेष्टने। गुत्सो रोषस्तृणजातिश्च ॥ गृधूच् अभिकाङ्क्षायाम्। गृत्सो विप्रः श्वा गृध्रोभिलाष-श्च ॥ तकारविधानमादिचतुर्थत्वबाधनार्थम् ॥ ५६८ ॥

तप्यणिपन्यल्यविरधिनभिनम्यमिचमितमिचटयतिपतेरसः ॥ ५६९ ॥

एभ्योसः प्रत्ययो भवति ॥ तपं संतापे। तपस आदित्यः पशुर्धर्मो घर्मश्च ॥ अण शब्दे। अणसः शकुनिः ॥ पनि स्तुतौ। पनसः फलवृक्षः ॥ अली भूषणादौ। अलसो निरुत्साहः ॥ अव रक्षणादौ। अवसो भानू राजा च। अवसं चापं पाथे-यं च ॥ रधौच् हिंसासंराद्ध्योः। रध इट् तु परोक्षायामेवेति नागमे। रन्धसो-न्धकजातिः ॥ णभच् हिंसायाम्। नभस ऋतुराकाशः समुद्रश्च ॥ णमं प्रह्वत्वे। नमसो वेत्रः प्रणामश्च ॥ अम गतौ। अमसः काल आहारः संसारो रोगश्च ॥ चमू अदने। चमसः सोमपात्रं मन्त्रपूतं पिष्टं च। चमसी मुद्गादिभि[र्]कृता ॥ तमूच् काङ्क्षायाम्। तमसोन्धकारः। तमसा नाम नदी ॥ चटण् भेदे। चटस-श्चर्मपुटः ॥ अत सातत्यगमने। अतसो वायुरात्मा वनस्पतिजातिश्च। अतस्योषधिः ॥ पत्लृ गतौ। पतसः पतंगः ॥ ५६९ ॥

सृवयिभ्यां णित् ॥ ५७० ॥

आभ्यां णिदसः प्रत्ययो भवति ॥ सृं गतौ। सारसः पक्षिविशेषः ॥ वयि गतौ। वायसः काकः ॥ ५७० ॥

वहियुभ्यां वा ॥ ५७१ ॥

आभ्यामसः प्रत्ययो [भवति] स च णिद्वा भवति ॥ वहीं प्रापणे। वाहसो

नड्वाङ्शकटमजगरो बहनजीवश्च ॥ वहसोनड्वाङ्शकटं च ॥ युक् मिश्रणे । यावसं भक्तं तृणं मिश्रं च ॥ यवसमश्वादिघासोऽसं च ॥ ५७१ ॥

दिवादिरभिलभ्युरिभ्यः कित् ॥ ५७२ ॥

दिवादिभ्यो रभिलभ्युरिभ्यश्च किदसः प्रत्ययो भवति ॥ दीव्यतेः । दिवसो वासरः ॥ व्रीडचनेर्लत्वे । व्रीलसो लज्जावान् ॥ नृत्यतेः । नृतसो नर्तकः ॥ क्षिप्यतेः । क्षिपसो योद्धा ॥ सीव्यतेः । सिवसः श्लोको वस्त्रं च ॥ भ्रीव्यतेः । भ्रिवसो गतिमान् ॥ इष्यतेः । इषस इष्वाचार्यः ॥ रभिं राभस्ये । रभसः संरम्भ उद्धर्षो गम्भीरश्च ॥ डुलभिष् प्राप्तौ । लभसो याचकः प्राप्तिश्च ॥ उरिः सौत्रः । उरस ऋषिः ॥ ५७२ ॥

फनसतामरसादयः ॥ ५७३ ॥

फनसादयः शब्दा असप्रत्ययान्ता निपात्यन्ते ॥ फण गतौ । नश्च । फनसः पनसः ॥ तमेररोन्तो वृद्धिश्च । तामरसं पद्मम् ॥ आदिशब्दात् कीकसबुक्कसादयो भवन्ति ॥ ५७३ ॥

युबलिभ्यामासः ॥ ५७४ ॥

आभ्यामासः प्रत्ययो भवति ॥ युक् मिश्रणे । यवासो दुरालभा ॥ बल प्राणनधान्यावरोधयोः । बलासः श्लेष्मा ॥ ५७४ ॥

किलेः कित् ॥ ५७५ ॥

किलत् श्वैत्यक्रीडनयोः । इत्यस्मात्किदासः प्रत्ययो भवति ॥ किलासं सिध्मम् । किलासी पाककर्परम् ॥ ५७५ ॥

तलिकसिभ्यामीसण् ॥ ५७६ ॥

आभ्यामीसण् प्रत्ययो भवति ॥ तलण् प्रतिष्ठायाम् । तालीसं गन्धद्रव्यम् ॥ कस गतौ । कासीसं धातुजमौषधम् ॥ ५७६ ॥

सेर्डित् ॥ ५७७ ॥

षिंग्ट् बन्धने । इत्यस्माड्डिदीसण् प्रत्ययो भवति ॥ सीसं लोहजातिः ॥ ५७७ ॥

त्रपेरुसः ॥ ५७८ ॥

त्रपौषि लज्जायाम् । इत्यस्मादुसः प्रत्ययो भवति ॥ त्रपुसं कर्कटिका । विधानसामर्थ्यबलात् पत्वाभावः ॥ ५७८ ॥

पटिवीभ्यां टिसडिसौ ॥ ५७९ ॥

आभ्यां यथासंख्यं टिसो डिदिसश्च प्रत्ययौ भवतः ॥ पट गतौ । पट्टिस आयुधविशेषः ॥ वींक् प्रजननादौ । विसं मृणालम् ॥ ५७९ ॥

तसः ॥ ५८० ॥

पटिवीभ्यां तसः प्रत्ययो भवति ॥ पट्टसस्त्रिशूलम् ॥ वेतसो वानीरः॥५८०॥

इणः ॥ ५८१ ॥

एतेस्तसः प्रत्ययो भवति ॥ एतसोऽध्वर्युः ॥ ५८१ ॥

पीङो नसक् ॥ ५८२ ॥

पींङ्च् पाने। इत्यस्मात्किन्नसः प्रत्ययो भवति ॥ पीनसः श्लेष्मा ॥५८२॥

कृकुरिभ्यां पासः ॥ ५८३ ॥

आभ्यां पासः प्रत्ययो भवति ॥ डुकृंग् करणे। कर्पासः पिचुप्रकृतिर्वीरुच ॥ कुरत् शब्दे । कूर्पासः कञ्चुकः ॥ ५८३ ॥

कलिकुलिभ्यां मासक् ॥ ५८४ ॥

आभ्यां किन्मासः प्रत्ययो भवति ॥ कलि शब्दसंख्यानयोः । कल्मासं शबलम् ॥ कुल बन्धुसंस्त्यानयोः । कुल्मासमर्धस्विन्नं माषादि ॥ ५८४ ॥

अलेरम्बुसः ॥ ५८५ ॥

अली भूषणादौ । इत्यस्मादम्बुसः प्रत्ययो भवति ॥ अलम्बुसो यातुधानः । अलम्बुसा नामौषधिः ॥ ५८५ ॥

लूगो हः ॥ ५८६ ॥

लुनातेर्हः प्रत्ययो भवति ॥ लोहं सुवर्णादि ॥ ५८६ ॥

कितो गे च ॥ ५८७ ॥

कित निवासे । इत्यस्मात् हः प्रत्ययो[भव]त्यस्य च गे इत्यादेशो भवति ॥ गेहं गृहम् ॥ ५८७ ॥

हिंसेः सिम् च ॥ ५८८ ॥

हिंसुप् हिंसायाम् । इत्यस्मात् हः प्रत्ययो[ भव ]त्यस्य च सिमित्यादेशो भवति ॥ सिंहो मृगराजः ॥ ५८८ ॥

कृपृकटिपटिमठिलटिलिलपलिकल्यनिरगिलगेर्गहः ॥ ५८९ ॥

एभ्योहः प्रत्ययो भवति ॥ कृत् विक्षेपे । करहो धान्यावपनम् ॥ पृश् पालनपूर-

णयोः । परहः शंकरः ॥ कटै वर्षावरणयोः । कटहः पर्जन्यः कर्णवच्च कालायसभाजनम् ॥ पट गतौ । पटहो वाद्यविशेषः ॥ मट सादे सौत्रः । मटहो ह्रस्वः ॥ लट बाल्ये । लटति विलसति । लटहो विलासवान् ॥ ललिण् ईप्सायाम् । ललहो लीलावान् ॥ पल गतौ । पलह आवापः ॥ कलि शब्दसंख्यानयोः । कलहो युद्धम् ॥ अनक् प्राणने । अनहो नीरोगः ॥ रगे शङ्कायाम् । रगहो नटः ॥ लगे सङ्गे । लगहो मन्दः ॥ ५८९ ॥

पुलेः कित् ॥ ५९० ॥

पुल महत्त्वे । इत्यस्मात्किदहः प्रत्ययो भवति ॥ पुलहः प्रजापतिः ॥ ५९० ॥

वृकटिशमिभ्य आहः ॥ ५९१ ॥

एभ्य आहः प्रत्ययो भवति ॥ वृग्ट् वरणे । वराहः सूकरः ॥ कटै वर्षावरणयोः । कटाहः कर्णवत्कालायसभाजनम् ॥ शमूच् उपशमे । शमाह आश्रमः ॥ ५९१ ॥

विलेः कित् ॥ ५९२ ॥

विलत् वरणे । इत्यस्मात्किदाहः प्रत्ययो भवति ॥ विलाहो रहः ॥ ५९२ ॥

निर इण ऊहश् ॥ ५९३ ॥

निर्पूर्वात् इणक् गतौ । इत्यस्मात् शिदूहः प्रत्ययो भवति ॥ निर्यूहः सौधादिकाष्ठनिर्गमः ॥ ५९३ ॥

दस्यूहः ॥ ५९४ ॥

ददातेस्यूहः प्रत्ययो भवति ॥ दात्यूहः पक्षिविशेषः ॥ ५९४ ॥

अनेरोकहः ॥ ५९५ ॥

अनक् प्राणने । इत्यस्मादोकहःप्रत्ययो भवति ॥ अनोकहो वृक्षः ॥ ५९५ ॥

वलेरक्षः ॥ ५९६ ॥

वलि संवरणे । इत्यस्मादक्षः प्रत्ययो भवति ॥ वलक्षः शुक्लः ॥ ५९६ ॥

लाक्षाद्राक्षामिक्षादयः ॥ ५९७ ॥

लाक्षादयः शब्दा अक्षप्रत्ययान्ता निपात्यन्ते ॥ लसेरा च । लाक्षा जतु ॥ रसेर्द्रा च । द्राक्षा मृद्वीका ॥ आङ्पूर्वात् मृदेरन्त्यस्वरादेर्लुक् प्रत्ययादेरित्वं च । आमिक्षा हविर्विशेषः ॥ आदिग्रहणात् चुप मन्दायां गतौ । इत्यस्य । चोक्षो मामरागः शुद्धं च ॥ एवं पीयूक्षादयोऽपि ॥ ५९७ ॥

समिण्निकषिभ्यामाः ॥ ५९८ ॥

सम्पूर्वात् इण्क् गतौ । इत्यस्मात् निपूर्वात् कष हिंसायाम् । इत्यस्माच्च आः प्रत्ययो भवति ॥ समया पर्वतम् ॥ निकषा पर्वतम् ॥ समीपार्थवाचिनावेतौ ॥ ५९८ ॥

दिविपुरिवृषिमृषिभ्यः कित् ॥ ५९९ ॥

एभ्यः किदाः प्रत्ययो भवति ॥ दिवूच् क्रीडाजयेच्छापणिद्युतिस्तुतिगतिषु । दिवाहः ॥ पुरत् अग्रगमने । पुरा भूतकालवाची ॥ वृषू सेचने । वृषा प्रबलमित्यर्थः ॥ मृषीच् तितिक्षायाम् । मृषाभूतमित्यर्थः ॥ ५९९ ॥

वेः साहाभ्याम् ॥ ६०० ॥

विपूर्वाभ्यां षोंच् अन्तकर्मणि । ओहांक् त्यागे । इत्येताभ्यामाः प्रत्ययो भवति ॥ विसा चन्द्रमा बुद्धिश्च । तालव्यान्तोयमित्येके ॥ विहा विहगः स्वर्गश्च ॥ ६०० ॥

वृमिथिदिशिभ्यस्थयटच्याश्चान्ताः ॥ ६०१ ॥

एभ्यः किदाः प्रत्ययो भवति यथासंख्यं थकारयकारटच्यकाराश्चान्ता भवन्ति ॥ वृगट् वरणे । वृथानर्थकम् ॥ मिथृग् मेधाहिंसयोः । मिथ्या मृषा निष्फलं च ॥ दिशींत् अतिसर्जने । दिष्ट्या प्रीतिवचनम् ॥ ६०१ ॥

मुचिस्वदेर्धे च ॥ ६०२ ॥

आभ्यां किदाः प्रत्ययो [ भवति ] धकारश्चान्तस्य भवति ॥ मुच्लृंती मोक्षणे । मुधानिमित्तम् ॥ ष्वदि आस्वादने । स्वधा पितृबलिः ॥ ६०२ ॥

सोर्ब्रूग आह च ॥ ६०३ ॥

सुपूर्वात् ब्रूगेराः प्रत्ययो [ भव ]त्याह इति चास्यादेशो भवति ॥ स्वाहा देवतातर्पणम् ॥ ६०३ ॥

सनिक्षमिदुषेः ॥ ६०४ ॥

एभ्यो धातुभ्य आः प्रत्ययो भवति ॥ षणूयी दाने । सना नित्यम् ॥ क्षमौषि सहने । क्षमा भूः क्षान्तिश्च ॥ दुषंच् वैकृत्ये । दोषा रात्रिः ॥ ६०४ ॥

डित् ॥ ६०५ ॥

धातोर्बहुलमाः प्रत्ययो भवति स च डिद्भवति ॥ मनिंच् ज्ञाने । मा निषेधे ॥ षोंच् अन्तकर्मणि । सावसानम् ॥ अनक् प्राणने । आ स्मरणादौ ॥ प्रींग्श् प्रीतौ । प्रा स्मयने । हनंक् हिंसागत्योः । हा विषादे ॥ वम भक्तौ । वा विकल्पे ॥

रांक् दाने । रा दीप्तिः ।। भांक् दीप्तौ । भा । सहपूर्वः । सभा परिषत् ।। ना-श्रीति सहस्य सः ।। ६०५ ।।

स्वरेभ्य इः ।। ६०६ ।।

स्वरान्तेभ्यो धातुभ्य इः प्रत्ययो भवति ।। जिं अभिभवे । वजी राजा ।। हिंट् गतिवृद्धयोः । हयिः कामः ।। रुक् शब्दे । रविः सूर्यः ।। कुंक् शब्दे । कविः काव्यकर्ता ।। ष्टुंग्क् स्तुतौ । स्तविरुद्गाता ।। लूग्श् छेदने । लविर्दात्रम् ।। पूग्श् पवने । पविर्वायुर्वज्रं पवित्रं च ।। भू सत्तायाम् । भविः सत्ता चन्द्रो विधिश्च ।। ऋंक् गतौ । अरिः शत्रुः ।। हंग् हरणे । हरिरिन्द्रो विष्णुश्चन्दनं मर्कटादिश्च । हरयः शाकाश्वाः ।। डुडुभृंग्क् पोषणे च । भरिर्वसुधा ।। सृं गतौ । सरिर्मेघः ।। पृश् पालनपूरणयोः । परिर्भूमिः ।। तॄ प्लवनतरणयोः । तरिर्नौः ।। दॄश् विदारणे । दरिर्महाभिदा ।। मॄश् हिंसायाम् । ण्यन्तः । मारिरशिवम् ।। वॄग्श् वरणे । वरिर्विष्णुः । ण्यन्तात् । वारिर्हस्तिबन्धनम् । वारि जलम् ।। ६०६ ।।

पदिपठिपचिस्थलिहलिकलिबलिवलिवल्लिपल्लिकटिचटिवटिवधि-गाध्यर्चिवन्दिनन्द्यविवशिवाशिकाशिछर्दितन्त्रिमन्त्रिखण्डिमाण्डि-चण्डियत्यञ्जिमस्यसिवनिध्वनिसनिगमितमिग्रन्थिश्रन्थि-जनिमण्यादिभ्यः ।। ६०७ ।।

एभ्य इः प्रत्ययो भवति ।। पदिंच् गतौ । पदी राशिर्मोक्षमार्गश्च ।। पठ व्यक्तायां वाचि । पठिर्विद्वान् ।। डुपचींष् पाके । पचिरग्निः ।। ष्ठल स्थाने । स्थलिर्दानशाला ।। हल विलेखने । हलिर्हलः ।। कलि शब्दसंख्यानयोः । कलिः कलहो युगं च ।। बल प्राणनधान्यावरोधयोः । बलिर्देवतोपहारो दानवश्च ।। वलि वल्लि संवरणे । वलिस्त्वक्तरंगः । वल्लिर्हिरण्यशलाका लता च ।। पल्ल गतौ । पल्लिर्मुनीनामाश्रमो व्याधसंस्त्यायश्च ।। कटे वर्षावरणयोः । कटिः स्वाङ्गम् ।। चटण् भेदे । चटिर्वर्णः ।। वट वेष्टने । वटिर्गुलिका तन्तुः शूना च नाभिर्वर्णश्च ।। वधि बन्धने । वधिः क्रियाशब्दः ।। गाधृङ् प्रतिष्ठालिप्सायन्थेषु । गाधिर्विश्वामित्रपिता ।। अर्च पूजायाम् । अर्चिरग्निशिखा ।। वदुङ् स्तुत्यभिवादनयोः । वन्दिर्महणिः ।। टुनदु समृद्धौ । नन्दिरीश्वरः प्रतीहारो भेरिश्च ।। अव रक्षणादौ । अविरूर्णायुः ।। वशक् कान्तौ । वशिर्वशिता ।। वाशिच् शब्दे । वाशिः कान्तौ रश्मिर्मेमायुरग्निः शब्दः प्रजननमात्रा चतुष्पाज्जालदश्च ।। काशृङ् दीप्तौ । काशयो जनपदः ।। छर्दण् वमने । छर्दिर्वमनम् ।। तन्त्रिण् कुटुम्बधारणे । तन्त्रिर्वीणासूत्रम् ।।

मन्त्रिण् गुप्तभाषणे । मन्त्रिः सचिवः ॥ खडुण् भेदे । खण्डिः प्रहारम् ॥ मडु भूषायाम् । मण्डिर्मृद्भाजनपिधानम् ॥ चडुङ् कोपे । चण्डिर्भामिनी ॥ यतैङ् प्रयत्ने । यतिर्भिक्षुः ॥ अञ्जौप् व्यक्तिम्रक्षणगतिषु । अञ्जिः सज्जः पेषणी पेजो गतिश्च । समञ्जिः शिभः ॥ मसैच् परिणामे । मसिः शाली ॥ असूच् क्षेपणे । असिः खड्गः॥ वनूयी याचने । वनिः साधुर्याच्ञा शकुनिरग्निश्च ॥ ध्वन शब्दे । ध्वनिर्नादः ॥ षन भक्तौ । सनिः संभक्ता पन्था दानं म्लेच्छो नदीतटं च ॥ गमॢ गतौ । गमिराचार्यः ॥ तमूच् काङ्क्षायाम् । तमिरलसः ॥ मन्थश् संदर्भे । ग्रन्थश् मोचनप्रतिहर्षणयोः । ग्रन्थिः ग्रन्थिश्च पर्वसंध्यादि ॥ जनैचि प्रादुर्भावे । जनिर्वधूः कुलाङ्गना भगिनी प्रादुर्भावश्च ॥ मण शब्दे । मणी रत्नम् ॥ आदिग्रहणात् वहीं प्रापणे । वहिरश्वः ॥ खादृ भक्षणे । खादिः श्वा ॥ दधि धारणे । दधि क्षीरविकारः ॥ खल संचये च । खलिः पिण्याकः ॥ शचि व्यक्तायां वाचि । शचीन्द्राणी । इतोऽत्यर्थादिति गौरादित्वाद्वा ङीः ॥ इत्यादयोऽपि भवन्ति ॥६०७॥

## किलिपिलिपिशिचिटित्रुटिशुण्ठितुण्डकुण्डभण्डहुण्डहिण्डिपिण्ड-चुल्लिबुधिमिथिरुहिदिविकीर्त्यादिभ्यः ॥६०८॥

एभ्य इः प्रत्ययो भवति ॥ किलत् श्वैत्यक्रीडनयोः । केलिः क्रीडा ॥ पिलण् क्षेपे । पेलिः क्षुद्रपेला ॥ पिशत् अवयवे । पेशिर्मांसखण्डम् ॥ चिट प्रेष्ये । चेटिर्दारिका प्रेष्या च ॥ त्रुटत् छेदने । ण्यन्तः । त्रोटिश्चञ्चुः ॥ शुठु शोषणे । शुण्ठिर्विश्वभेषजम् ॥ तुडुङ् तोडने । तुण्डिरास्यं प्रवृद्धा च नाभिः ॥ कुडुङ् दाहे । कुण्डिर्जलभाजनम् ॥ भडुङ् परिभाषणे । भण्डिः शकटम् ॥ हुडुङ् संघाते । हुण्डिः पिण्डित ओदनः ॥ हिडुङ् गतौ च । हिण्डी रात्रौ रक्षाचारः ॥ पिडुङ् संघाते । पिण्डिर्निष्पीडितस्नेहपिण्डः ॥ चुल्ल हावकरणे । चुल्ली रन्धनस्थानम् ॥ बुधिंच् ज्ञाने । बोधिः सम्यग्ज्ञानम् ॥ मिथृग् मेधाहिंसयोः । मेथिः खलमध्यस्थूणा ॥ रुहं जन्मनि । रोहिः सस्यं जन्म च ॥ दिवूच् क्रीडादौ । देविर्भूमिः॥ कृतण् संशब्दने । णिजन्तः । कीर्तिर्यशः ॥ आदिग्रहणादन्येऽपि ॥६०८॥

## नाम्युपान्त्यकृगृशॄपॄपूड्भ्यः कित् ॥ ६०९ ॥

नाम्युपान्त्येभ्यः कादिभ्यश्च किदिः प्रत्ययो भवति ॥ लिखत् अक्षरविन्यासे । लिखिः शिल्पम् ॥ शुच शोके । शुचिः पूतो विद्वान्धर्म आषाढश्च ॥ रुचि अभिप्रीत्यां च । रुचिर्दीप्तिरभिलाषश्च ॥ भुजंप् पालनाभ्यवहारयोः । भुजिरग्नी

राजा कुटिलं च ॥ कुणत् शब्दोपकरणयोः । कुणिर्विकलो हस्तो हस्तविकलश्च ॥ सृजंत् विसर्गे । सृजिः पन्थाः ॥ शुति दीप्तौ । शुतिर्दीप्तिः ॥ ऋत घृणागतिस्पर्धेषु । ऋतिर्यतिः ॥ छिदृंपी द्वैधीकरणे । छिदिश्छेत्ता परशुश्च ॥ मुदि हर्षे । मुदिर्बालः ॥ भिदृंपी विदारणे । भिदिर्वज्रं सूचको भेत्ता च ॥ ऊछृदूपी दीप्तिदेवनयोः । छृदी रथकारः ॥ लिपींत् उपदेहे । लिपिरक्षरजातिः ॥ तुर त्वरणे सौत्रः । तुरिस्तन्तुवायोपकरणम् ॥ तुलण् उत्क्षेपे । तुलिः कच्छपः ॥ त्विषीं दीप्तौ । त्विषिर्दीप्तिस्त्विषिमान्राजवर्चस्वी च ॥ कृषींत् विलेखने । कृषिः कर्षणं कर्षणभूमिश्च ॥ ऋषैत् गतौ । ऋषिर्मुनिर्वेदश्च ॥ कुषश् निष्कर्षे । कुषिः शुषिरम् ॥ शुषंच् शोषणे । शुषिश्छिद्रं शोषणं च ॥ रुषू अलीके । रुषिरलीकवादी दीप्तिस्तुष्टिश्च ॥ ष्णुहीच् उद्गिरणे । स्नुहिर्वृक्षः ॥ कृत् विक्षेपे । किरिः शूकरो मूषिको गन्धर्वो गर्तश्च ॥ गृत् निगरणे । गिरिर्नगः कन्दुकश्च ॥ शृश् हिंसायाम् । शिरिर्हिंस्रः शोकः खड्गः पाषाणश्च ॥ पृश् पालनपूरणयोः । पुरिर्नगरं राजा पूरयिता च ॥ पुङ् पवने । पुविर्वातः ॥ ६०९ ॥

विदिवृतेर्वा ॥ ६१० ॥

आभ्यामिः प्रत्ययो भवति स च किद्वा भवति ॥ विदक् ज्ञाने । विदिः शिल्पी । वेदिरिज्यादिस्थानम् ॥ वृतूङ् वर्तने । वृतिः कण्टकशाखावरणम् । निर्वृतिः सुखम् । वर्तिर्द्रव्यं दीपाङ्गं च ॥ ६१० ॥

तॄभ्रम्यब्यापिदम्भिभ्यस्तित्तिरभृमाधापदेभाश्च ॥ ६११ ॥

एभ्यः किदिः प्रत्ययो [भव]त्येषां च यथासंख्यं तित्तिर भृम अध अप देभ इत्यादेशा भवन्ति ॥ तॄ प्लवनतरणयोः । तित्तिरिः शकुनिजातिः प्रवक्ता च वेदशाखायाः ॥ भ्रमू चलने । भृमिर्वायुर्हस्ती जलं च । बाहुलकाद्भ्रमादेशाभावे । भ्रमिर्भ्रमः ॥ अदं प्सांक् भक्षणे । अभ्युपरिभावे । अध्यागच्छति ॥ आप्लृंट् व्याप्तौ । अपि समुच्चयादौ । प्लक्षोपि न्यग्रोधोपि ॥ दम्भूट् दम्भे । देभिः शरासनम् ॥६११॥

मनेरुदेतौ चास्य वा ॥ ६१२ ॥

मनिंच् ज्ञाने । इत्यस्मादिः प्रत्ययो [भव]त्यकारस्य च उकार-एकारौ वा भवतः ॥ मुनिर्ज्ञानवान् ॥ मेनिः संकल्पः ॥ मनिर्धूमवर्तिः ॥ ६१२ ॥

कमिलमिस्तम्भेरिच्च नमेस्तु वा ॥ ६१३ ॥

एभ्यः किदिः प्रत्ययो [भव]त्यकारस्य च इकारो भवति नमेः पुनरकारस्य

विकल्पेन इकारः ॥ क्रमु पादविक्षेपे । क्रिमिः क्षुद्रजन्तुः ॥ तमूष् काङ्क्षायाम् । तिमिर्महामत्स्यः ॥ स्तम्भिः सौत्रः । स्तिभिः केतकादिसूची इदयं समुद्रश्च ॥ णमं प्रह्वत्वे । निमी राजा । नमिर्विद्याधराणामाद्यस्तीर्थकरश्च ॥ ६१३ ॥

अभिकुण्ठिकम्प्यंहिभ्यो नलुक् च ॥ ६१४ ॥

एभ्य इः प्रत्ययो [भवति] नकारस्य च लुग्भवति ॥ अभुङ् शब्दे । अभ्याभिमुख्येऽव्ययम् । अभ्यग्नि शलभाः पतन्ति ॥ कुठु आलस्ये च । कुठिर्वृक्षः पापं वृषलो देहो गेहं कुठारश्च ॥ कपुङ् चलने । कपिरग्निर्वानरश्च ॥ अहुङ् गतौ । अहिः सर्पो वृत्रो वप्रश्च ॥ ६१४ ॥

उभेर्द्वत्रौ च ॥ ६१५ ॥

उभत् पूरणे । इत्यस्मादिः प्रत्ययो भवत्यस्य च द्वत्रावित्यादेशौ भवतः ॥ द्वि द्वितीयो द्विमुनि व्याकरणस्य ॥ त्रयस्तृतीयस्त्रिमुनि व्याकरणस्य ॥ ६१५ ॥

नीवीप्रहृभ्यो डित् ॥ ६१६ ॥

एभ्यो डिदिः प्रत्ययो भवति ॥ णींग् प्रापणे । निवसति ॥ वींक् प्रजनादौ । विस्तन्तुवायः पक्ष्युपसर्गश्च ॥ वया विभवति ॥ हंग् हरणे । प्रपूर्वः । प्रहिः कूप उदपानं च ॥ ६१६ ॥

वौ रिचेः स्वरान्नोऽन्तश्च ॥ ६१७ ॥

वावुपसर्गे सति रिचूंपी विरेचने । इत्यस्मादिः प्रत्ययो [भवति] स्वरात्परो नोऽन्तश्च भवति ॥ विरिञ्चिर्ब्रह्मा ॥ ६१७ ॥

कमिवमिजमिघसिशलिफलितलितडिवजिव्रजिध्वजिराजिपणिवणिवदि-सदिहदिहनिसहिवहितपिवपिभटिकम्बिसंपतिभ्यो णित् ॥ ६१८ ॥

एभ्यो णिदिः प्रत्ययो भवति ॥ कमूङ् कान्तौ । कामिर्वञ्चकः कामी च ॥ टुवमू उद्गिरणे । वामिः स्त्री ॥ जमू अदने । जामिर्भगिनी तृणं जनपदश्चैकः ॥ घस्लृं अदने । घासिः संग्रामो गर्तोऽग्निर्बहुभुक् च ॥ शल गतौ । शालिर्व्रीहिराजः ॥ फल निष्पत्तौ । फालिर्हलम् ॥ तलण् प्रतिष्ठायाम् । तालिर्वृक्षजातिः ॥ तडण् आघाते । ताडिः स एव ॥ वज व्रज ध्वज गतौ । वाजिरश्वः पुङ्खावसानं च ॥ व्राजिः पद्धतिः पिटकजातिश्च ॥ ध्वाजिः पताकाध्वजः ॥ राजृग् दीप्तौ । राजिः पङ्क्तिर्लेखा च ॥ पणि व्यवहारस्तुत्योः । पाणिः करः ॥ वण शब्दे । वाणिर्वाक् ।

ङ्गम् । वाणी ॥ वद व्यक्तायां वाचि । वादिर्वाग्मी वीणा च ॥ षद्लृं विशरण-गत्यवसादनेषु । सादिरश्वारोहः सारथिश्च ॥ हदि पुरीषोत्सर्गे । हादिर्लूता ॥ हनंक् हिंसागत्योः । घातिः प्रहरणम् । केचित्तु हानिरथेनाश उच्छित्तिश्चेत्युदाहरन्ति । तत्र बाहुलकात् क्ङिति घादिति घात्व भवति । बाहुलकादेव णित्वविकल्पे । हनिरायुधम् ॥ षहि मर्षणे । साहिः शैलः ॥ वहीं प्रापणे । वाहिरनड्वान् ॥ तपं संतापे । तापिर्दानवः ॥ डुवपीं बीजसंताने । वापिः पुष्करिणी ॥ भट भृतौ । भाटिः सुरतमूल्यम् ॥ कचुङ् दीप्तौ । काञ्चिर्मेखला पुरी च । णित्करणादनुपान्त्यस्यापि वृद्धिः ॥ पत्लृ गतौ । सम्पूर्वात् । संपातिः पक्षिराजः ॥ ६१८ ॥

कृशॄकुटिग्रहिखन्यणिकष्यलिपलिचरिवसिगण्डिभ्यो वा ॥ ६१९ ॥

एभ्य इः प्रत्ययो [ भवति ] स च णिद्वा भवति ॥ डुकृंग् करणे । कारिः शिल्पी । करिर्हस्ती विष्णुश्च ॥ शॄश् हिंसायाम् । शारिर्द्यूतोपकरणं हस्तिपर्याणं शारिका च । शरिर्हिंसा शूलश्च ॥ कुटत् कौटिल्ये । कोटिराश्रिरग्रभागोऽष्टमं चाङ्कस्थानम् । कुटिर्गृहं शरीराङ्गं च ॥ ग्रहीश् उपादाने । ग्राहिः पतिः । ग्रहिर्वेणुः ॥ खनूग् अवदारणे । खानिः खनिश्च निधिराकरस्तडागं च ॥ अण शब्दे । आणिरणिश्च द्वारकीलिका ॥ कष हिंसायाम् । काषिः कर्षकः । कषिर्निकषोपलः काष्ठमश्वकर्णः खनित्रं च ॥ अली भूषणादौ । आलिः पङ्क्तिः सखी च । अलिर्भ्रमरः ॥ पल गतौ । पालिर्जलसेतुः कर्णपर्यन्तश्च । पलिः संस्त्यायः ॥ चर भक्षणे च । चारिः पशूनां भक्ष्यम् । चरिः प्राकारशिखरं विषयो वायुः पशुः केशोर्णा च ॥ वसं निवासे । वासिस्तक्षोपकरणम् । वसिः शय्याभिर्गृहं रात्रिश्च ॥ गडु वदनैकदेशे । गण्डिर्गण्डिका । णित्त्वपक्षेनुपान्त्यस्यापि वृद्धौ । गाण्डिर्धनुष्पर्व ॥ ६१९ ॥

पादाच्चात्यजिभ्याम् ॥ ६२० ॥

पादशब्दपूर्वाभ्यां केवलाभ्यां चात्यजिभ्यां णिदिः प्रत्ययो भवति ॥ अत सातत्यगमने । अज क्षेपणे च । पादाभ्यामततीति । अजतीति वा । पदातिः । पदाजिः । पदः पादस्याज्यातिगोपहत इति पदभावः । उभावपि पत्तिवाचिनौ ॥ आतिः पक्षी । स्वपूर्वात् । स्वातिर्वायव्यनक्षत्रम् ॥ आजिः संग्रामः स्पर्धावधिश्च ॥ ॥ ६२० ॥

नहेर्भ च ॥ ६२१ ॥

णहींच् बन्धने । इत्यस्माण्णिदिः प्रत्ययो भवति भकारश्चान्तादेशो भवति ॥ नाभिरन्त्यकुलकरश्चक्रमध्यं शरीरावयवश्च ॥ ६२१ ॥

अशो रश्चादिः ॥ ६२२ ॥

अशौङ् व्याप्तौ । इत्यस्माण्णिदिः प्रत्ययो [ भवति ] रैफश्च धातोरादिर्भवति ॥ राशिः समूहो नक्षत्रपादनवकरूपश्च मेषादिः ॥ ६२२ ॥

कायः किरिच्च वा ॥ ६२३ ॥

कैं शब्दे । इत्यस्मात्किः प्रत्ययो [भवति] इकारश्चान्तादेशो वा भवति ॥ किकिः पक्षी विहगश्च ॥ काकिः स्वरदोषः ॥ ६२३ ॥

वर्धेरकिः ॥ ६२४ ॥

वर्धण् छेदनपूरणयोः। इत्यस्मादकिः प्रत्ययो भवति ॥ वर्धकिस्तक्षा॥६२४॥

सनेर्डखिः ॥ ६२५ ॥

षणूयी दाने । इत्यस्माड्डिदखिः प्रत्ययो भवति ॥ सखा मित्रम् । सखायौ । सखायः ॥ ६२५ ॥

कोर्डिखिः ॥ ६२६ ॥

कुंङ् शब्दे । इत्यस्माड्डिदिखिः प्रत्ययो भवति ॥ किखिर्लोमसिका॥६२६॥

मृश्विकण्यणिदध्यविभ्य ईचिः ॥ ६२७ ॥

एभ्य ईचिः प्रत्ययो भवति ॥ मृत् प्राणत्यागे । मरीचिर्मुनिर्मयूखश्च ॥ ट्वोश्वि गतिवृद्ध्योः । श्वयीचिश्चन्द्रः श्वयथुश्च ॥ कण अण शब्दे । कणीचिः प्राणी लता चक्षुः शकटं शङ्खश्च ॥ अणीचिर्वेणुः शाकटिकश्च ॥ दधि धारणे । दधीचो राजर्षिः ॥ अव रक्षणादौ । अवीचिर्नरकविशेषः ॥ ६२७ ॥

वेगो डित् ॥ ६२८ ॥

वेंग् तन्तुसंताने । इत्यस्माड्डिदीचिः प्रत्ययो भवति ॥ वीचिरूर्मिः ॥६२८॥

वणेर्णित् ॥ ६२९ ॥

वण शब्दे । इत्यस्माण्णिदीचिः प्रत्ययो भवति ॥ वाणीचिश्छाया व्याधिश्च ॥ ६२९ ॥

कृपिशकिभ्यामटिः ॥ ६३० ॥

आभ्यामटिः प्रत्ययो भवति ॥ कृपौङ् सामर्थ्ये । कर्पटिः निःस्वः ॥ शक्लृट् शक्तौ । शकटिः शकटम् ॥ ६३० ॥

श्रेर्डिः ॥ ६३१ ॥

श्रिग् सेवायाम् । इत्यस्माड्डिः प्रत्ययो भवति ॥ श्रेढिर्गणितव्यवहारः ॥६३१॥

घसेरुच्चातः ॥ ६३२ ॥

घसू अदने । इत्यस्माड्डिः प्रत्ययो भवत्यकारस्य उकारो भवति ॥ घुण्डिः क्षुद्रवापी ॥ ६३२ ॥

मुषेरुण् चान्तः ॥ ६३३ ॥

मुषश् स्तेये । इत्यस्माड्डिः प्रत्ययो [ भव ]त्युण् चान्तो भवति ॥ मुषुण्डिः प्रहरणम् । उणो न गुणो विधानसामर्थ्यात् ॥ ६३३ ॥

कावावीक्रीश्रिश्रुक्षुज्वरितूरिचूरिपूरिभ्यो णिः ॥ ६३४ ॥

एभ्यो णिः प्रत्ययो भवति ॥ कैं शब्दे । काणिर्वैलक्ष्यानुसर्पणम् ॥ वेंग् तन्तुसंताने । वाणिर्व्यूतिः ॥ वींक् प्रजननादौ । वेणिः कबरी ॥ डुक्रींग्श् द्रव्यविनिमये । क्रेणिः क्रयविशेषः ॥ श्रिग् सेवायाम् । श्रेणिः पङ्क्तिर्वलविशेषश्च । श्रेणयोऽष्टादश गणविशेषाः । निपूर्वात् । निश्रेणिः संक्रमः ॥ श्रुंट् श्रवणे । श्रोणिर्जघनम् ॥ टुक्षुक् शब्दे । क्षोणिः पृथिवी ॥ ज्वर रोगे । जूर्णिर्ज्वरो वायुरादित्योऽग्निः शरीरं ब्रह्मा पुराणश्च ॥ तूरैचि त्वरायाम् । तूर्णिस्त्वरा मनः शीघ्रश्च ॥ चूरैचि दाहे । चूर्णिर्वृत्तिः ॥ पूरैचि आप्यायने । पूर्णिः पूरः ॥ ६३४ ॥

ऋत्घृसृकुवृषिभ्यः कित् ॥ ६३५ ॥

ऋकारान्तेभ्यो घृ इत्यादिभ्यश्च किण्णिः प्रत्ययो भवति ॥ शॄश् हिंसायाम् । शीर्णी रोगोऽवयवश्च ॥ स्तॄग्श् आच्छादने । स्तीर्णिः संस्तरः ॥ घृं सेचने । घृणी रश्मिर्ज्वाला निदाघश्च ॥ सृं गतौ । सृणिरादित्यो वज्रमनिलोऽङ्कुशोऽग्निश्च ॥ कुंङ् शब्दे । कुणिर्विकलो हस्तो हस्तविकलश्च ॥ वृषू सेचने । वृष्णिर्वस्तो मेषो यदुविशेषश्च । पर्यन्तेऽपीच्छन्त्येके । घृष्णी रश्मिः ॥ ६३५ ॥

पृषिहृषिभ्यां वृद्धिश्च ॥ ६३६ ॥

आभ्यां णिः प्रत्ययो [ भव ]त्यनयोश्च वृद्धिर्भवति ॥ पृषू सेचने । पार्ष्णिः पादपश्चाद्भागः पृष्ठप्रदेशश्च ॥ हृषच् तुष्टौ । हार्ष्णिर्हरणम् ॥ ६३६ ॥

हूर्णिधूर्णिभूर्णिघूर्ण्यादयः ॥ ६३७ ॥

एते णिप्रत्ययान्ता निपात्यन्ते ॥ हंग् हरणे । धृंग् धारणे । भू सत्तायाम् । घृं सेचने । ऊत्वं रश्चान्तो निपात्यते ॥ हूर्णि कुल्या ॥ धूर्णिर्धृतिः ॥ भूर्णिश्चेतनं भूमिः कालश्च ॥ घूर्णिर्धर्मः ॥ आदिग्रहणादन्योऽपि ॥ ६३७ ॥

ऋहसृमृधृभृकृतृग्रहेरणिः ॥ ६३८ ॥

एभ्योऽणिः प्रत्ययो भवति ॥ ऋक् गतौ । अरणिरग्निमथनकाष्ठम् ॥ हंग् हरणे । हरणिः कुल्या मृत्युश्च ॥ सृं गतौ । सरणिरीषद्गतिः पन्था आदित्यः सिरासंघातश्च ॥ मृंत् प्राणत्यागे । मरणी रात्रिः ॥ धृंग् धारणे । धरणिः क्षितिः ॥ डुडुभृंग्क् पोषणे च । भरणिर्नक्षत्रम् ॥ डुकृंग् करणे । करणिः सादृश्यम् ॥ तॄ प्लवनतरणयोः । तरणिः संक्रम आदित्यो यवागूः पतितगोरूपोत्थापनी च यष्टिः। वै दुःखार्थे । दुःखेन तीर्यत इति वैतरणी नदी ॥ ग्रहीश् उपादाने । ग्रहणिर्जठराग्निस्तदाधारो व्याधिर्मैत्रं मृत्युश्च ॥ ६३८ ॥

कङ्केरिच्चास्य वा ॥ ६३९ ॥

ककुङ् गतौ । इत्यस्मादणिः प्रत्ययो [ भवति ] धातोरकारस्य च इकारो वा भवति ॥ कङ्कणिः कङ्कणम् ॥ किङ्कणिर्घण्टा ॥ ६३९ ॥

ककेर्णित् ॥ ६४० ॥

ककि लौल्ये । इत्यस्माण्णिदणिः प्रत्ययो भवति ॥ काकणिर्मानविशेषः ॥ ६४० ॥

कृषेश्च चादेः ॥ ६४१ ॥

कृषींत् विलेखने । इत्यस्मादणिः प्रत्ययो [ भव ]त्यादेश्च चकारो भवति ॥ चर्षणिश्चमूरग्निर्बुद्धिर्व्यवसायो वेश्या वृषश्च ॥ ६४१ ॥

क्षिपेः कित् ॥ ६४२ ॥

क्षिपींत् प्रेरणे । इत्यस्मात्किदणिः प्रत्ययो भवति ॥ क्षिपणिरायुधं वडिशाबन्धककर्मकृता पाषाणसर्जनी च ॥ ६४२ ॥

आङः कृहृशुषेः सनः ॥ ६४३ ॥

आङः परेभ्यो डुकृंग् करणे । हंग् हरणे । शुषंच् शोषणे । इत्येतेभ्यः सन्नन्तेभ्योऽणिः प्रत्ययो भवति ॥ आचिकीर्षणिर्व्यवसायः ॥ आजिहीर्षणिः श्रीः ॥ आशुशुक्षणिरग्निर्वायुश्च ॥ ६४३ ॥

वारिसर्त्यादेरिणिक् ॥ ६४४ ॥

एभ्यः किदिणिः प्रत्ययो भवति ॥ वृगट् वरणे । व्यत्ययः । वारिणिः पशुः पशुवृत्तिश्च ॥ सृं गतौ । सिणिरग्निर्मेघं च ॥ आदिग्रहणादन्येऽपि ॥ ६४४ ॥

अदेस्तीणिः ॥ ६४५ ॥

अदंक् भक्षणे । इत्यस्मात्तीणिः प्रत्ययो भवति ॥ अत्तीणिः कृमिजातिः ॥ ६४५ ॥

द्युज्ञायाजिषपिपदिवसिवितसिभ्यस्तिः ॥ ६४६ ॥

एभ्यस्तिः प्रत्ययो भवति ॥ द्युङ् गतौ । द्योतिश्चीरम् ॥ ज्ञांश् अवबोधने । ज्ञायते त्रैलोक्यस्य ज्ञातेति ज्ञातिरिक्ष्वाकुर्वृषभः स्वजनश्च ॥ यजीं देवपूजादौ । यष्टिर्दण्डो लता च ॥ षप समवाये । सप्तिरश्वः ॥ पदिंच् गतौ । पत्तिः पदातिः ॥ वसं निवासे । वस्तिः सूत्राधारश्चर्मपुटः स्नेहनोपकरणं च ॥ तसूच् उपक्षये । विपूर्वः । वितस्तिरर्धहस्तः ॥ ६४६ ॥

प्रथेर्लुक् च वा ॥ ६४७ ॥

प्रथिष् प्रख्याने । इत्यस्मात्तिः प्रत्ययो [ भव ] त्यन्तस्य च लुग्वा भवति ॥ वृक्षं प्रति विद्योतते । प्रतिष्ठितः ॥ पक्षे । प्रत्तिः प्रथनं भागश्च ॥ ६४७ ॥

कोर्यषादिः ॥ ६४८ ॥

कुंक् शब्दे । इत्यस्माद्यषादिस्तिः प्रत्ययो भवति ॥ कोयष्टिः पक्षिविशेषः ॥ ६४८ ॥

ग्रो गृष् च ॥ ६४९ ॥

गृत् निगरणे । इत्यस्मात्तिः प्रत्ययो [ भव ] त्यस्य च गृष् इत्यादेशो भवति ॥ गृष्टिः सकृत्प्रसूता गौः ॥ ६४९ ॥

सोरस्तेः शित् ॥ ६५० ॥

सुपूर्वात् असक् भुवि । इत्यस्मात् शित्तिः प्रत्ययो भवति ॥ स्वस्ति कल्याणम् ॥ शित्त्वाद्भूभावाल्लुगभावः ॥ ६५० ॥

दृमुषिकृषिरिषिविषिशोशुच्यशिपूयीण्प्रभृभ्यः कित् ॥ ६५१ ॥

एभ्यः कित्तिः प्रत्ययो भवति ॥ दृंङ्त् आदरे । दृतिश्छागादित्वग्मयो जलाधारः ॥ मुषश् स्तेये । मुष्टिरङ्गुलिसंनिवेशविशेषः ॥ कृषींत् विलेखने । कृष्टिः पण्डितः ॥ रिष हिंसायाम् । रिष्टिः प्रहरणम् ॥ विषूंकी व्याप्तौ । विष्टिरचेतनकर्मकरः ॥ शोंच् तक्षणे । शितिः कृष्णः कृशश्च ॥ शुच शोके । शुक्तिः मुक्तादिः ॥ अशौटि व्याप्तौ । अष्टिश्छन्दोविशेषः ॥ पूयैङ् दुर्गन्धविशरणयोः । पूतिर्दुर्गन्धो दुष्टं तृणजातिश्च ॥ इणक् गतौ । इतिः हेत्वादौ ॥ डुभृंग्क् पोषणे च । प्रपूर्वः । प्रभृतिरादिः ॥ ६५१ ॥

कुच्योर्नोन्तश्च ॥ ६५२ ॥

आभ्यां किदतिः प्रत्ययो भवति नकारश्चान्तो भवति ॥ कुङ् शब्दे । कुन्ती राजा । कुन्तयो जनपदः ॥ चिंगृट् चयने । चिन्ती राजा ॥ ६५२ ॥

खल्यमिरमिवहिवस्यर्तेरतिः ॥ ६५३ ॥

एभ्योतिः प्रत्ययो भवति ॥ खल संचये च । खलतिः खल्वाटः ॥ अम गतौ । अमतिश्चातकश्छागः प्रावृण्मार्गो व्याधिर्गतिश्च ॥ रमिं क्रीडायाम् । रमतिः क्रीडा कामः स्वर्गः सभा च ॥ वहीं प्रापणे । वहतिर्गौर्वायुरमात्योपत्यं कुटुम्बं च ॥ वसं निवासे । वसतिर्निवासो ग्रामसंनिवेशश्च ॥ ऋक् गतौ । अरतिर्वायुः सरणमसुखं क्रोधो वर्म च ॥ ६५३ ॥

हन्तेरंह च ॥ ६५४ ॥

हनंक् हिंसागत्योः । इत्यस्मादतिः प्रत्ययो [ भव ] त्यस्य च अंह इत्यादेशो भवति ॥ अंहतिर्व्याधिः पन्थाः कालो रथश्च ॥ ६५४ ॥

वृगो व्रत च ॥ ६५५ ॥

वृगट् वरणे । इत्यस्मादतिःप्रत्ययो [भव] त्यस्य च व्रत इत्यादेशो भवति ॥ व्रततिर्वल्ली ॥ ६५५ ॥

अञ्चेः क च वा ॥ ६५६ ॥

अञ्चू गतौ च । इत्यस्मादतिः प्रत्ययो [ भवति ] ककारश्चान्तादेशो वा भवति ॥ अक्कतिर्वायुः प्रजापतिरग्निश्च ॥ अञ्चतिरग्निः ॥ ६५६ ॥

वातेर्णिद्वा ॥ ६५७ ॥

वांक् गतिगन्धनयोः । इत्यस्मादतिः प्रत्ययो [ भवति ] स च णिद्वा भवति ॥ वायतिर्वातः ॥ वातिर्गन्धमिश्रपवनः ॥ ६५७ ॥

योः कित् ॥ ६५८ ॥

युक् मिश्रणे । इत्यस्मात्किदतिः प्रत्ययो भवति ॥ युवतिस्तरुणी ॥ ६५८ ॥

पातेर्वा ॥ ६५९ ॥

पांक् रक्षणे । इत्यस्मादतिः प्रत्ययो [ भवति ] स च किद्वा भवति ॥ पतिर्भर्ता ॥ पातिर्भर्ता रक्षिता प्रभुश्च ॥ ६५९ ॥

अगिविलिपुलिक्षिपेरस्तिक् ॥ ६६० ॥

एभ्यः किदस्तिः प्रत्ययो भवति ॥ अग कुटिलायां गतौ । अगस्तिः ॥

विलत् वरणे । विलस्तिः ॥ पुल महत्त्वे । पुलस्तिः ॥ क्षिपींत् प्रेरणे । क्षिपस्तिः ॥ एते लौकिका ऋषयः । अगस्तिर्वृक्षजातिश्च ॥ ६६० ॥

गृधेर्गभ च ॥ ६६१ ॥

गृधूच् अभिकाङ्क्षायाम् । इत्यस्मादस्तिक् प्रत्ययो भवति गभ चास्यादेशो भवति ॥ गभस्ती रश्मिः ॥ ६६१ ॥

वस्यर्तिभ्यामातिः ॥ ६६२ ॥

आभ्यामातिः प्रत्ययो भवति ॥ वसं निवासे । वसातयो जनपदः ॥ ऋक् गतौ । अरातिः शत्रुः ॥ ६६२ ॥

अभेर्यामाभ्याम् ॥ ६६३ ॥

अभिपूर्वाभ्यामाभ्यामातिः प्रत्ययो भवति ॥ यांक् प्रापणे । मांक् माने । अभियातिरभिमातिश्च शत्रुः ॥ ६६३ ॥

यजो य च ॥ ६६४ ॥

यजीं देवपूजादौ । इत्यस्मादातिः प्रत्ययो[भवति] यकारश्चान्तादेशो भवति ॥ ययाती राजा ॥ ६६४ ॥

वद्यविच्छदिभूभ्योन्तिः ॥ ६६५ ॥

एभ्योन्तिः प्रत्ययो भवति ॥ वद व्यक्तायां वाचि । वदन्तिः कथा ॥ अव रक्षणादिषु । अवन्ती राजा । अवन्तयो जनपदः ॥ छदण् अपवारणे । युजादिविकल्पितणिजन्तत्वादण्यन्तः । छदन्तिर्गृहाच्छादनद्रव्यम् ॥ भू सत्तायाम् । भवन्तिः कालो लोकस्थितिश्च ॥ ६६५ ॥

शकेरुन्तिः ॥ ६६६ ॥

शकॢट् शक्तौ । इत्यस्मादुन्तिः प्रत्ययो भवति ॥ शकुन्तिः पक्षी ॥ ६६६ ॥

नञो दागो डितिः ॥ ६६७ ॥

नञ्पूर्वात् डुदांग्क् दाने । इत्यस्माड्डितिः प्रत्ययो भवति ॥ अदितिर्देवमाता ॥ ६६७ ॥

देङः ॥ ६६८ ॥

देंङ् पालने । इत्यस्माड्डितिः प्रत्ययो भवति ॥ दितिरसुरमाता॥६६८॥

वीसञ्ज्यासिभ्यस्थिक् ॥ ६६९ ॥

एभ्यस्थिक् प्रत्ययो भवति ॥ वींक् प्रजननादिषु । वीथिर्मार्गः ॥ षञ्जं सङ्गे । सक्थि ऊरुः शकटाङ्गं च ॥ असूच् क्षेपणे । अस्थि पञ्चमो धातुः ॥६६९॥

सारेरथिः ॥ ६७० ॥

सृं गतौ । इत्यस्माण्ण्यन्तादथिः प्रत्ययो भवति ॥ सारथिर्यन्ता ॥ ६७० ॥

निषञ्जेर्घित् ॥ ६७१ ॥

निपूर्वात् षञ्जं सङ्गे । इत्यस्माद्घिदथिः प्रत्ययो भवति ॥ निषङ्गथी वज्रो धनुर्धरश्च ॥ घित्करणं गत्वार्थम् ॥ ६७१ ॥

उदर्तेर्णिद्वा ॥ ६७२ ॥

उत्पूर्वात् ऋंक् गतौ । इत्यस्मादथिः प्रत्ययो [भवति] स च णिद्वा भवति ॥ उदारथिर्विष्णुः ॥ उदरथिर्विप्रः काष्ठं समुद्रोऽनड्वांश्च ॥ ६७२ ॥

अतेरिथिः ॥ ६७३ ॥

अत सातत्यगमने । इत्यस्मादिथिः प्रत्ययो भवति ॥ अतिथिः पात्रतमो भिक्षावृत्तिः ॥ ६७३ ॥

तनेर्डित् ॥ ६७४ ॥

तनूयी विस्तारे । इत्यस्माड्डिदिथिः प्रत्ययो भवति ॥ तिथिः प्रतिपदादिः ॥ ६७४ ॥

उषेरधिः ॥ ६७५ ॥

उषू दाहे । इत्यस्मादधिः प्रत्ययो भवति ॥ ओषधिरुद्भिद्विशेषः ॥ ६७५ ॥

विदो रधिक् ॥ ६७६ ॥

विदक् ज्ञाने । इत्यस्मात्किद्रधिः प्रत्ययो भवति ॥ विद्रधिर्व्याधिविशेषः ॥ ६७६ ॥

वीयुसुवह्यगिभ्यो निः ॥ ६७७ ॥

एभ्यो निः प्रत्ययो भवति ॥ वींक् प्रजनमादौ । वेनिर्व्याधिर्नदी च ॥ युक् मिश्रणे । योनिः प्रजननमङ्गमुत्पत्तिस्थानं च ॥ षुंग्ट् अभिषवे । सोनिः सवनम् ॥ वहीं प्रापणे । वह्निः पावको बलीवर्दश्च ॥ अग कुटिलायां गतौ । अग्निः पावकः ॥ ६७७ ॥

धूशाशीङो ह्रस्वश्च ॥ ६७८ ॥

एभ्यो निः प्रत्ययो [भवति] ह्रस्वश्चैषां भवति ॥ धूग्श् कम्पने । धुनिर्नदी ॥ शोंच् तक्षणे । शनिः सौरिः ॥ शीङ्क् स्वप्ने । शिनिर्यादवो वर्णश्च ॥ ६७८ ॥

लूधूपृङ्भ्यः कित् ॥ ६७९ ॥

एभ्यः किन्निः प्रत्ययो भवति ॥ लूग्श् छेदने । लूनिर्लवनः ॥ धूग्श् कम्पने । धूनिर्वायुः ॥ पृङ् प्रीणने । पृश्निर्वर्णोऽल्पतनुः किरणः स्वर्गश्च ॥ ६७९ ॥

सदिवृत्यमिधम्यश्यटिकटयवेरनिः ॥ ६८० ॥

एभ्योऽनिः प्रत्ययो भवति ॥ षद्लृ विशरणादौ । सदनिर्जलम् ॥ वृतूङ् वर्त्तने । वर्तनिः पन्था देशनाम च ॥ अम गतौ । अमनिरग्निः ॥ धमः सौत्रः । धमनिर्मन्या रसवहा च शिरा ॥ अशौटि व्याप्तौ । अशनिरिन्द्रायुधम् ॥ अट गतौ । अटनिश्चापकोटिः ॥ कटे वर्षावरणयोः । कटनिः शैलमेखला ॥ अव रक्षणादौ । अवनिर्भूः ॥ ६८० ॥

रञ्जेः कित् ॥ ६८१ ॥

रञ्जीं रागे । इत्यस्मात्किदनिः प्रत्ययो भवति ॥ रजनी रात्रिः ॥६८१॥

अर्तेरत्निः ॥ ६८२ ॥

ऋंक् गतौ । इत्यस्मादत्निः प्रत्ययो भवति ॥ अरत्निर्बाहुमध्यं शम उत्कनिष्ठश्च हस्तः ॥ ६८२ ॥

एधेरिनिः ॥ ६८३ ॥

एधि वृद्धौ । इत्यस्मादिनिः प्रत्ययो भवति ॥ एधिनिर्मेदिनी ॥ ६८३ ॥

शकेरुनिः ॥ ६८४ ॥

शक्लृंट् शक्तौ । इत्यस्मादुनिः प्रत्ययो भवति ॥ शकुनिः पक्षी ॥ ६८४ ॥

अदेर्मनिः ॥ ६८५ ॥

अर्द प्सांक् भक्षणे । इत्यस्मान्मनिः प्रत्ययो भवति ॥ अद्मनिः पशूनां भक्षणद्रोण्यग्निर्जठरो हस्त्वभस्त्रा तालु च ॥ ६८५ ॥

दमेर्दुभिर्दुम् च ॥ ६८६ ॥

दमूच् उपशमे । इत्यस्मादुभिः प्रत्ययो [भव]त्यस्य च दुम् इत्यादेशो भवति ॥ दुन्दुभिर्देवतूर्यम् ॥ ६८६ ॥

नीसावृयुशृवलिदलिभ्यो मिः ॥ ६८७ ॥

एभ्यो मिः प्रत्ययो भवति ॥ णींग् प्रापणे । नेमिश्चक्रधारा ॥ षोंच् अन्तकर्मणि । साम्बर्धवाच्यमव्ययम् ॥ वृगूट् वरणे । वर्मिर्वल्मीककृमिः ॥ युक् मिश्रणे । योमिः शकुनिः ॥ शॄश् हिंसायाम् । शर्मिर्मृगः ॥ वलि संवरणे । वल्मिरिन्द्रः समुद्रश्च ॥ दल विशरणे । दल्मिरायुधमिन्द्रः समुद्रः शक्रो विषं वा ॥ ६८७ ॥

अशो रश्चादिः ॥ ६८८ ॥

अशौटि व्याप्तौ । इत्यस्मान्मिः प्रत्ययो [भवति] रेफश्च धातोरादिर्भवति ॥ रश्मिः प्रग्रहो मयूखश्च ॥ ६८८ ॥

सर्तेरूच्चातः ॥ ६८९ ॥

आभ्यां मिः प्रत्ययो [भवति] गुणे च कृतेकारस्य ऊकारादेशो भवति ॥ सृ गतौ । सूर्मिःस्थूणा ॥ ऋक् गतौ । ऊर्मिस्तरंगः ॥ ६८९ ॥

कृभूभ्यां कित् ॥ ६९० ॥

आभ्यां किन्मिः प्रत्ययो भवति ॥ डुकृंग् करणे । कृमिः क्षुद्रजन्तुजातिः ॥ भू सत्तायाम् । भूमिर्वसुधा ॥ ६९० ॥

क्वणेर्डयिः ॥ ६९१ ॥

क्वण शब्दे । इत्यस्माड्डिदयिः प्रत्ययो भवति ॥ क्वयिः पक्षिविशेषः ॥६९१॥

तङ्कि-वङ्क्यङ्क्मिङ्क्यंहिशाद्यदिसव्यशौवपिवशिभ्यो रिः ॥ ६९२ ॥

एभ्यो रिः प्रत्ययो भवति ॥ तकु कृच्छ्रजीवने । तङ्क्रिर्युवा ॥ वकुङ् कौटिल्ये । वङ्क्रिः शल्यं परशुका रथोदः कुटिलश्च ॥ अकुङ् लक्षणे । अङ्क्रिश्चिह्नं वंशकठिनिकश्च ॥ मकुङ् मण्डने । मङ्क्रिर्मण्डनं शठः प्रवकश्च ॥ अहुङ् गतौ । अंह्रिः पादः । अङ्घ्रिरप्येके । अघुङ् गत्याक्षेपे । अङ्घ्रिः ॥ शदू शातने । शाद्रिर्भ-स्म हस्ती वज्रं गिरिर्ऋषिः शोभनश्च ॥ अदं प्सांक् भक्षणे । अद्रिः पर्वतः ॥ षद्लृं विशरणादौ । सद्रिर्हस्ती गिरिर्मेघश्च ॥ अशौटि व्याप्तौ । अश्रिः कोटिः ॥ डुवपीं बीजसंताने । वप्रिः केदारः ॥ वशक् कान्तौ । वश्रिः समूहः ॥ ६९२ ॥

भूसूकुशिविशिशुभिभ्यः कित् ॥ ६९३ ॥

एभ्यः किद्रिः प्रत्ययो भवति ॥ भू सत्तायाम् । भूरि प्रभूतं काञ्चनं च ॥ षूत् प्रेरणे । सूरिराचार्यः पण्डितश्च ॥ कुशच् श्लेषणे । कुश्रिर्ऋषिः ॥ विशंत् प्रवेशने । विश्रिर्मृत्युर्ऋषिश्च ॥ शुभि दीप्तौ । शुभ्रिर्यतिर्विप्रो दर्शनीयं शुभं सत्वं च ॥ ६९३ ॥

जॄषो रश्च वः ॥ ६९४ ॥

जॄषच् जरसि । इत्यस्मात्किद्रिः प्रत्ययो[भवति] ईरि सति रेफस्य वकार-श्च भवति ॥ जीव्रिः शरीरम् ॥ ६९४ ॥

कुम्ब्रिकुद्र्यादयः ॥ ६९५ ॥

कुम्ब्र्यादयः शब्दाः किद्रिप्रत्ययान्ता निपात्यन्ते ॥ कुपेः कौतेश्च दन्तान्तः । कुम्ब्रिर्ऋषिः ॥ कुद्रिः पर्वत ऋषिः समुद्रश्च ॥ आदिग्रहणात् क्षौवेर्दोन्तः । क्षुद्रिः समुद्रः ॥ खर्वेर्णोन्तः । ऋभिर्लौकनाथः ॥ शकेः । शक्रिर्बलवान् ॥ इत्यादयोऽपि भवन्ति ॥ ६९५ ॥

राशादिशकिकञ्चादिभ्यस्त्रिः ॥ ६९६ ॥

एभ्यस्त्रिः प्रत्ययो भवति ॥ रांक् दाने । रात्रिर्निशा ॥ शद्लृ शातने । शत्रिः कुञ्जरः क्रौञ्चश्च ॥ शकृंट् शक्तौ । शक्त्रिः क्रौञ्चः कपिश्च ॥ कच बैक्लव्ये सौत्रः । कच्त्रिर्ऋषिः ॥ अद प्सांक् भक्षणे । अत्त्रिर्ऋषिः ॥ ६९६ ॥

पतेरत्रिः ॥ ६९७ ॥

पत्लृ गतौ । इत्यस्मादत्रिः प्रत्ययो भवति ॥ पतत्रिः पक्षी ॥ ६९७ ॥

नदिवल्ल्यार्त्तिकृतेररिः ॥ ६९८ ॥

एभ्योऽरिः प्रत्ययो भवति ॥ णद अव्यक्ते शब्दे । नदरिः पटहः ॥ वल्लि संवरणे । वल्लरिर्लता वीणा सस्यमञ्जरी च ॥ ऋंक् गतौ । अररिः कपाटः ॥ कृतैत् छेदने । कर्तरिः केशादिकर्तनयन्त्रम् ॥ ६९८ ॥

मस्यसिघसिजस्यञ्जिसहिभ्य उरिः ॥ ६९९ ॥

एभ्य उरिः प्रत्ययो भवति ॥ मसैच् परिणामे । मसुरिर्मरीचिः ॥ असूच् क्षेपणे । असुरिः संग्रामः ॥ घस्लृ अदने । घसुरिरग्निः ॥ जसूच् मोक्षणे । जसुरिः समाप्तिरशनिररणिः क्रोधश्च ॥ अञ्जु गतौ । अङ्गुरिः करशाखा । लत्वे अङ्गुलिः ॥ षहि मर्षणे । सहुरिः पृथिव्यक्रोधनोनड्वान्संग्रामोन्धकारः सूर्यश्च ॥ ६९९ ॥

मुहेः कित् ॥ ७०० ॥

मुहौच् वैचित्त्ये । इत्यस्मात्किदुरिः प्रत्ययो भवति ॥ मुहुरिः मूर्खोनड्वांश्च ॥ ७०० ॥

धूमूभ्यां लिक्लिणौ ॥ ७०१ ॥

आभ्यां यथासंख्यं लिक् लिण् इति प्रत्ययौ भवतः ॥ धूग्श् कम्पने । धूलिः पांशुः ॥ मूङ् बन्धने । मौलिर्जूटः ॥ ७०१ ॥

पाट्यञ्जिभ्यामलिः ॥ ७०२ ॥

आभ्यामलिः प्रत्ययो भवति ॥ पट गतौ । ण्यन्तः । पाटलिर्वृक्षविशेषः ॥ अञ्जौप् व्यक्त्यादौ । अञ्जलिः पाणिपुटः प्रणामहस्तयुग्मं च ॥ ७०२ ॥

माशालिभ्यामोकुल्मलौ ॥ ७०३ ॥

आभ्यां यथासंख्यमोकुलि मलि इत्येतौ प्रत्ययौ भवतः ॥ मांक् माने । मौकुलिः काकः ॥ शल गतौ । ण्यन्तः । शाल्मलिर्वृक्षविशेषः ॥ ७०३ ॥

दृपॄवृभ्यो विः ॥ ७०४ ॥

एभ्यो विः प्रत्ययो भवति ॥ दृञ् विदारणे । दर्विस्तर्दूः ॥ पॄश् पालनपूरणयोः । पर्विः कङ्गो लिंगञ्च ॥ वृग्श् वरणे । वर्विः शकटं धान्यो काकः श्वेनश्च ॥ ७०४ ॥

जॄशॄस्तॄजागृकृनीघृषिभ्यो ङित् ॥ ७०५ ॥

एभ्यो ङिद्विः प्रत्ययो भवति ॥ जॄष्च् जरसि । जीर्विः पशुः कण्टकः शकटो मद्गुः कायो गुल्मं शङ्खा वृद्धो वृद्धभावश्च ॥ शॄश् हिंसायाम् । शीर्विर्हिंस्रः कृमिर्न्यङ्कुश्च ॥ स्तॄग्श् आच्छादने । स्तीर्विर्गर्विष्ठोऽध्वर्युर्भगस्तनू रुधिरं भयं तृणजातिर्नभोजश्च ॥ जागृक् निद्राक्षये । जागृवी राजाग्निः प्रबुद्धश्च । ङित्वान्न गुणः ॥ डुकृंग् करणे । कृवी रुद्रस्तन्तुवायस्तन्तुवायद्रव्यं राजा च । यदुपञ्च कृवश्च इति पुरा पञ्चालानाचक्षते ॥ णींग् प्रापणे । नीविः परिधानग्रन्थिर्मूलधनं च ॥ घृषू संहर्षे । घृष्विर्वराहो वायुरग्निश्च ॥ ७०५ ॥

छविछिविस्फविस्फिविस्थविस्थिविदविदीविकिकिविदिदिविदीदिविकिकीदिविकिकिदीविशिव्यटव्यादयः ॥ ७०६ ॥

एते ङिद्विप्रत्ययान्ता निपात्यन्ते ॥ छ्यतेर्ह्रस्वश्च । छविस्त्वक्तच्छायावर्णं च ॥ छिदेर्लुक् च । छिविः फल्गुद्रव्यम् ॥ स्फायतेः स्फस्फिभावौ च । स्फविर्वृक्षजातिः । स्फिविर्वृक्ष उदश्विञ्च ॥ तिष्ठतेः स्थस्थिभावौ च । स्थविः प्रसेवकस्तन्तुवायः सीमा भिरजङ्गमः स्वर्गः कुष्ठी कुष्ठिमांसं फलं च । स्थिविः सीमा ॥ दमेर्लुक् च । दविर्धर्मशीलो दाता स्थानं कालश्च ॥ दीव्यतेर्दीर्घश्च । दीविः कितवो द्युतिमान्कालो व्याघ्रजातिश्च ॥ कितेर्द्वित्वं पूर्वस्य चत्वाभावो लुक् च । किकिविः पक्षिविशेषः ॥ दिवेर्द्वित्वं पूर्वदीर्घत्वं च वा । दिदिविः स्वर्गः । दीदिविरन्नं स्वर्गश्च ॥ कितेः किकीदिभावश्च । किकीदिविर्वर्णः पक्षी च ॥ किकिपूर्वाद्दीव्यतेर्दीर्घश्च । किकीति कुर्वन्दीव्यति । किकिदीविश्चाषः ॥ शीङो ह्रस्वश्च । शिवी राजा ॥ अटेरथान्तः । अटविररण्यम् ॥ आदिग्रहणादन्येऽपि ॥ ७०६ ॥

मुषिपुषिशुषिकुष्यशिभ्यः सिक् ॥ ७०७ ॥

एभ्यः किसिः प्रत्ययो भवति ॥ मुषू मुषू दाहे । मुक्षिरग्निरुदपानश्च ॥ पुक्षिरग्निर्जठरं कुष्ठलश्च ॥ शुषंच् शोषणे । शुक्षिर्वायुर्ग्निरात्मा अंबालककर्तेजश्च ॥ कुषश् निष्कर्षे । कुक्षिर्जठरम् ॥ अशौटि व्याप्तौ । अक्षि नेत्रम् ॥ ७०७ ॥

गोपादेरनेरसिः ॥ ७०८ ॥

गोप इत्यादिभ्यः परात् अनक् प्राणने । इत्यस्मादसिः प्रत्ययो भवति ॥ गोपानसिः सौधाग्रभागच्छदिः ॥ चित्रानसिर्जलचरः ॥ एकानसिरुज्जयनी ॥ वाराणसिः कासिनगरी ॥ ७०८ ॥

वृधॄपॄवॄसाभ्यो नसिः ॥ ७०९ ॥

एभ्यो नसिः प्रत्ययो भवति ॥ वृगूट् वरणे । वर्णसिस्तटः ॥ धृंग् धारणे । धर्णसिः शैलो लोकपालो जलं माता च ॥ पॄश् पालनपूरणयोः । पर्णसिर्जलधर उलूखलं शाकादिश्च ॥ बॄश् भरणे । वर्णसिर्भूमिः ॥ षोंच् अन्तकर्मणि । सानसिः स्नेहो नखो हिरण्यमृणं सखा सनातनश्च ॥ ७०९ ॥

व्रियो ह्किः ॥ ७१० ॥

व्रींश् वरणे । इत्यस्मात्किद् हिः प्रत्ययो भवति ॥ व्रीहिर्धान्यविशेषः ॥ ७१० ॥

तॄस्तृतन्द्रितन्त्र्यविभ्य ईः ॥ ७११ ॥

एभ्य ईः प्रत्ययो भवति ॥ तॄ प्लवनतरणयोः । तरीर्नौरग्निर्वायुः प्लवनश्च ॥ स्तृग्श् आच्छादने । स्तरीस्तृणं धूमो मेघो नदी शय्या च ॥ तन्द्रिः सादमोहनयोः सौत्रः । तन्द्री मोहनिद्रा ॥ तन्त्रिण् कुटुम्बधारणे । तन्त्रीः शुष्कस्नायुर्वादित्रचालस्वं च ॥ अव रक्षणादौ । अवीः प्रकाश आदित्यो भूमिः पशू राजा स्त्री च ॥ ७११ ॥

नडेर्णित् ॥ ७१२ ॥

नडेः सौत्रादीः प्रत्ययो [भवति] स च णिद्भवति ॥ नाडीशिरावत्सुषिरं द्रव्यमर्धमुहूर्तश्च ॥ ७१२ ॥

वातात् प्रमः कित् ॥ ७१३ ॥

वातपूर्वपदात्प्रेणोपसृष्टात् मांक् माने । इत्यस्मात्किदीः प्रत्ययो भवति ॥ वातप्रमीर्वात्याश्वो वातमृगः पक्षी शमी च वृक्षः ॥ ७१३ ॥

यापाभ्यां द्वे च ॥ ७१४ ॥

आभ्यां किदीः प्रत्ययो [भवत्य]नयोश्च द्वे रूपे भवतः ॥ यांक् प्रापणे । ययीर्मोक्षमार्गो दिव्यवृष्टिरादित्योऽश्वश्च ॥ पां पाने । पपीः रश्मिः सूर्यो हस्ती च ॥ ॥ ७१४ ॥

लक्षेर्मोऽन्तश्च ॥ ७१५ ॥

लक्षीण् दर्शनाङ्कनयोः । इत्यस्मादीः प्रत्ययो [भवति] मकारश्चान्तो भवति ॥ लक्ष्मीः श्रीः ॥ ७१५ ॥

भृमृतृत्सरितनिधन्यविमनिमस्जिशीङ्वटिकडिपटिगडिचञ्च्यसि-
वसित्रपिगृध्रुत्स्नुस्निहिक्लिदिकन्दीन्दिविन्द्यन्धिबन्ध्यणि-
लोष्टिकुन्थिभ्य उः ॥ ७१६ ॥

एभ्य उः प्रत्ययो भवति ॥ डुडुभृंग्क् पोषणे च । भृंग् भरणे वा । भरुः समुद्रो वर्णिभर्ता च ॥ मृंत् प्राणत्यागे । मरुर्निर्जलो देशो गिरिश्च ॥ तॄ प्लवनतरणयोः । तरु-र्वृक्षः ॥ त्सर छद्मगतौ । त्सरुरादर्शखड्गादिग्रहणप्रदेशो चञ्चकः क्षुरिका च ॥ तनूयी विस्तारे । तनुर्देहः सूक्ष्मश्च ॥ धन धान्ये सौत्रः । धनुरस्त्रं दानमानं च ॥ अनक् प्राणने । अनुः प्राणः । अनु पश्चादाद्यर्थेऽव्ययम् ॥ मनिच् ज्ञाने । मनूयी बोधने वा । मनुः प्रजापतिः ॥ टुमस्जोंत् शुद्धौ । मद्गुर्जलवायसः ॥ शीङ्क् स्वप्ने । शयुरजगरः स्वप्न आदित्यश्च ॥ वट वेष्टने । वटुर्माणवकः ॥ कडं मदावरणयोः । कडू रसविशेषः ॥ पट गतौ । पटुर्दक्षः ॥ गड सेचने । गडुर्घाटामस्तकयोर्मध्ये मांसपिण्डः स्फोटश्च ॥ चञ्चू गतौ । चञ्चुः पक्षिमुखम् ॥ असूच् क्षेपणे । असवः प्राणाः ॥ वसं निवासे । वसु द्रव्यं तेजो देवता च । वसुः कश्चिद्राजा ॥ त्रपौषि लज्जायाम् । त्रपु लोहविशेषः ॥ शृश् हिंसायाम् । शरुः क्रोध आयुधं हिंस्रश्च ॥ णीस्नृ शब्दोपतापयोः । स्नरुः गतापो वज्रो वज्रास्फालनं च ॥ ष्णिहौच् प्रीतौ । स्नेहुश्चन्द्रमाः संनिपातजो व्याधिविशेषः पित्तं वनस्पतिश्च ॥ क्लिदौच् आर्द्रभावे । क्लेदुः क्षेत्रं चन्द्रो भगः शरीरभङ्गश्च । क्लेदयतीति क्लेदुश्चन्द्रमा इत्यन्ये ॥ कदु रोदनाह्वानयोः । कन्दुः पाकस्थानं सूत्रोतं च क्रीडनम् ॥ इदु परमैश्वर्ये । इन्दुश्चन्द्रः ॥ विदु अवयवे । बिन्दुर्विप्रुट् ॥ अन्धण् दृष्ट्युपसंहारे । अन्धुः कूपो व्रणश्च ॥ बन्धंश् बन्धने । बन्धुः स्वजनः । बन्धु द्रव्यम् ॥ अण शब्दे । अणुः पुद्गलः सूक्ष्मो रालकादिश्च धान्यविशेषः ॥ लोष्टि संघाते । लोष्टुर्मृत्पिण्डः ॥ कुन्थश् संक्लेशे । कुन्थुः सूक्ष्मजन्तुः ॥ ७१६ ॥

स्यन्दिसृजिभ्यां सिन्धरज्जौ च ॥ ७१७ ॥

आभ्यामुः प्रत्ययो [ भव ]त्यनयोश्च यथासंख्यं सिन्ध रज्ज इत्यादेशौ भव-तः ॥ स्यन्दौङ् स्रवणे । सिन्धुर्नदो नदी समुद्रश्च ॥ सृजंत् विसर्गे । सृजिच् विसर्गे वा । रज्जुर्दवरकः ॥ ७१७ ॥

पंसेर्दीर्घश्च ॥ ७१८ ॥

पशुण् नाशने । इत्यस्मादुः प्रत्ययो [ भवति ] दीर्घश्च भवति ॥ पांशुः पार्थिवं रजः ॥ ७१८ ॥

अशीराशोन्तश्च ॥ ७१९ ॥

अशौटि व्याप्तौ । इत्यस्मादुः प्रत्ययो [भव]त्यकाराच्च परो नोन्तो भवति ॥ अंशुः रश्मिः सूर्यश्च । प्रांशुर्दीर्घश्च ॥ ७१९ ॥

नमेर्नाक् च ॥ ७२० ॥

णमं प्रह्वत्वे । इत्यस्मादुः प्रत्ययो [भव]त्यस्य च नाक् इत्यादेशो भवति ॥ नाकुर्व्यलीकं वनस्पतिर्ऋषिर्वल्मीकश्च ॥ ७२० ॥

मनिजनिभ्यां धतौ च ॥ ७२१ ॥

आभ्यामुः प्रत्ययो [भव]त्यनयोश्च यथासंख्यं धकारतकारौ भवतः ॥ मनिंच् ज्ञाने । मधु क्षौद्रं सीधु च । मधुरसुरो मासश्च चैत्रः ॥ जनैचि प्रादुर्भावे । जतु लाक्षा ॥ ७२१ ॥

अर्जेर्ऋज् च ॥ ७२२ ॥

अर्ज अर्जने । इत्यस्मादुः प्रत्ययो [भव] त्यस्य च ऋज् इत्यादेशो भवति । ऋज्वकुटिलम् ॥ ७२२ ॥

कृतेस्तर्क् च ॥ ७२३ ॥

कृतैत् छेदने । कृतैप् वेष्टने । इत्यस्माद्वा उः प्रत्ययो [भव]त्यस्य च तर्क् इत्यादेशो भवति ॥ तर्कुधुन्दः सूत्रवेष्टनशलाका च ॥ ७२३ ॥

नेरञ्चेः ॥ ७२४ ॥

निपूर्वादञ्चतेरुः प्रत्ययो भवति ॥ न्यङ्कुर्मृग ऋषिश्च ॥ ७२४ ॥

किमः श्रो णित् ॥ ७२५ ॥

किम्पूर्वात् शॄश् हिंसायाम् । इत्यस्माण्णिदुः प्रत्ययो भवति ॥ किंशारुः शूको धान्यशिखा हिंस्र इषुश्च ॥ ७२५ ॥

मिवहिचरिचटिभ्यो वा ॥ ७२६ ॥

एभ्य उः प्रत्ययो [भवति] स च णिद्वा भवति ॥ डुमिंग्ट् प्रक्षेपणे । मायुः पित्तं मानं शब्दश्च । गोमायुः सृगालः ॥ मयुः किंनर उष्ट्रः प्रक्षेप आकूतं च । बाहुलकाद्वात्वाभावः ॥ वहीं प्रापणे । बाहुर्भुजः ॥ वहु प्रभूतम् ॥ चर भक्षणे च । चारु शोभनम् ॥ चरन्त्यस्मादैकपितृभूतानि । भीमादित्वादपादानेपि । चरुर्देवतोद्देशेन पाकः स्थाली च ॥ चटण् भेदे । चाटुः प्रियाचरणं चटुजनः प्रियवादी स्फुटवादी दर्शयं शिष्यश्च ॥ चटुः प्रियाचरणम् ॥ ७२६ ॥

ऋतॄशॄमृभादिभ्यो रो लश्च ॥ ७२७ ॥

एभ्यो णिदुः प्रत्ययो [ भवति ] रेफस्य च लकारो भवति ॥ ऋंक् गतौ । ऋं प्रापणे च वा । आलुः श्लेष्मा श्लेष्मातकः कन्दविशेषश्च ॥ तॄ प्लवनतरणयोः । तालुः काकुदम् ॥ शॄश् हिंसायाम् । शालुः कषायो हिंस्रश्च ॥ मृंत् प्राणत्यागे । मालुः पत्रलता यस्या मालुधानीति प्रसिद्धिः ॥ डुडुभृंग्क् पोषणे च । भालुरिन्द्रः ॥ आदिग्रहणादन्येपि ॥ ७२७ ॥

कृकस्थूराद्वचः क् च ॥ ७२८ ॥

आभ्यां पराद्वचो णिदुः प्रत्ययो [ भवति ] ककारश्चान्तादेशो भवति ॥ वचंक् भाषणे । ब्रूंगक् व्यक्तायां वाचि । कृकमव्यक्तं वक्ति ब्रूते वा । कृकवाकुः कुकुटः कृकलासः खञ्जरीटश्च ॥ एवं स्थूरवाकुरव्यक्तध्वनिः ॥ ७२८ ॥

पृकाहृषिधृषीषिकुहिभिदिविदिमृदिव्यधिगृध्यादिभ्यः कित् ॥ ७२९ ॥

एभ्य. किदुः प्रत्ययो भवति ॥ पृश् पालनपूरणयोः । पुरुर्महांल्लोकः समुद्रो यजमानो राजा च कश्चित् ॥ कैं शब्दे । कुः पृथ्वी ॥ हृषच् तुष्टौ । हृषू अलीके वा । हृषुस्तुष्टोलीकः सूर्याग्निशशिनश्च ॥ ञिधृषाट् प्रागल्भ्ये । धृषुः प्रगल्भः संताप उत्साहः पर्वतश्च ॥ इषत् इच्छायाम् । इषुः शरः ॥ कुहणि विस्मापने । कुहुर्नष्टचन्द्रामावास्या ॥ भिदृंपी विदारणे । भिदुर्वज्रः कन्दर्पश्च ॥ विदक् ज्ञाने । विदुर्हस्तिमस्तकैकदेशः ॥ मृदश् क्षोदे । मृदुरकठिनः ॥ व्यधंच् ताडने । विधुश्चन्द्रो वायुरग्निश्च ॥ गृधूच् अभिकाङ्क्षायाम् । गृधुः कामः ॥ आदिग्रहणात् पुरैचि आप्यायने । पुरण् आप्यायने वा । पुरितमनेन यशसा सर्वमिति पूरु राजर्षिः ॥ एवमन्येपि ॥ ७२९ ॥

रभिप्रथिभ्यामृच्च रस्य ॥ ७३० ॥

आभ्यां किदुः प्रत्ययो [ भवति ] रेफस्य च ऋकारो भवति ॥ रभि राभस्ये । ऋभवो देवाः ॥ प्रथिष् प्रख्याने । पृथू राजा विस्तीर्णश्च ॥ ७३० ॥

स्पशिभ्रस्जेः स्लुक् च ॥ ७३१ ॥

आभ्यां किदुः प्रत्ययो [ भवति ] सकारस्य च लुग्भवति ॥ स्पशिः सौत्रस्तालव्यान्तः । पशुस्तिर्यङ् मन्त्रवध्यश्च जनः ॥ भ्रस्जींत् पाके । भृगुः प्रपातो ब्राह्मणश्च मुनिः । कित्वात् ग्रह-व्रश्च-भ्रस्ज-प्रच्छ इति वृत् । न्यङ्कूद्गमेघादय इति गत्वम् ॥ ७३१ ॥

दुःस्वपवनिभ्यः स्थः ॥ ७२२ ॥

दुः सु अप वनि इत्येतेभ्यः परात् ष्ठां गतिनिवृत्तौ । इत्यस्मात्किदुः प्रत्ययो भवति ॥ दुष्ठु शोभनम् ॥ सुष्ठु सातिशयम् ॥ अपष्ठु वामम् ॥ वनिष्ठुर्वपासंनिहितोऽवयवोऽश्वः संभक्तोपानं च ॥ ७२२ ॥

हनियाकृभृपृतॄभ्यो द्वे च ॥ ७२३ ॥

एभ्यः किदुः प्रत्ययो [भव]त्येषां च द्वे रूपे भवतः ॥ हनंक् हिंसागत्योः । जघ्नुरिन्द्रो वेगवांश्च ॥ यांक् प्रापणे । ययुरश्वो यायावरः स्वर्गमार्गश्च ॥ डुकृंग् करणे । चक्रुः कर्मठो वैकुण्ठश्च ॥ डुडुभृंग्क् पोषणे च । भृंग् भरणे वा । बभ्रुर्ऋषिर्नकुलो राजा वर्णश्च ॥ पृश् पालनपूरणयोः । पुपुरुः समुद्रश्चन्द्रो लोकश्च ॥ तॄ प्लवनतरणयोः । तितिरुः पतंगः ॥ त्रैङ् पालने । तत्रुर्नौका ॥ ७२३ ॥

कृगॄभ्यां कृत उर् च ॥ ७२४ ॥

आभ्यां किदुः प्रत्ययो [भव]त्यृकारस्य च उर् भवति ॥ कृत् विक्षेपे । कुरू राजर्षिः । कुरवो जनपदः ॥ गृश् शब्दे । गुरुराचार्यो लघुप्रतिपक्षः पूज्यश्च जनः ॥ ७२४ ॥

पचेरिच्चातः ॥ ७२५ ॥

डुपचींष् पाके । इत्यस्मादुः प्रत्ययो [भव]त्यकारस्य च इकारो भवति ॥ पिचुर्निरस्थीकृतकर्पासः ॥ ७२५ ॥

अर्तेरूर् च ॥ ७२६ ॥

ऋंक् गतौ । इत्ययस्मादुः प्रत्ययो [भव]त्यस्य च ऊर् इत्यादेशो भवति ॥ ऊरुः शरीराङ्गम् ॥ ७२६ ॥

महत्युर् च ॥ ७२७ ॥

अर्तेर्महत्यभिधेय उः प्रत्ययो [भव]त्यस्य च उर् इत्यादेशो भवति ॥ उरु विस्तीर्णम् ॥ ७२७ ॥

उड् च भे ॥ ७२८ ॥

अर्तेर्भे नक्षत्रेऽभिधेय उः प्रत्ययो [भवति] धातोश्च उडादेशो भवति ॥ उडु नक्षत्रम् ॥ ७२८ ॥

श्लिषेः क् च ॥ ७२९ ॥

श्लिषंच् आलिङ्गने । इत्यस्मात्किदुः प्रत्ययो [भवति] ककारश्चान्तादेशो भवति ॥ श्लिकुर्मृगास्थि [सव्यवसायो राज्ञ] ज्योतिष लेवकश्च ॥ ७२९ ॥

रङ्घिलङ्घिलिङ्गेर्नलुक् च ॥ ७४० ॥

एभ्य उः प्रत्ययो [ भवति ] नकारस्य च लुग्भवति ॥ रघु लघुङ् गतौ । रघू राजा ॥ लघु तुच्छं शीघ्रं च ॥ लिगुण् चित्रीकरणे । लिगुर्ऋषिः सेवको मूर्खो भूमिविशेषश्च ॥ ७४० ॥

पीमृगमित्रदेवकुमारलोकधर्मविश्वसुम्नाश्मावेभ्यो यः ॥ ७४१ ॥

पी मृग मित्र देव कुमार लोक धर्म विश्व सुम्न अश्मन् अव इत्येतेभ्यः परात् यांक् प्रापणे । इत्यस्मात्किदुः प्रत्ययो भवति ॥ पीयुरुलूक आदित्यः सुवर्णं कालश्च ॥ मृगयुर्व्याधो मृगश्च ॥ मित्रयुर्ऋषिर्मित्रवत्सलश्च ॥ देवयुर्धार्मिकः ॥ कुमारयू राजपुत्रः ॥ लोकयुर्वाक्यकुशलो जनः ॥ धर्मयुर्धार्मिकः ॥ विश्वयुर्वायुः ॥ सुम्नयुर्यजमानः ॥ अश्मयुर्मूर्खः ॥ अवयुः काव्यम् ॥ ७४१ ॥

पराङ्भ्यां शृखनिभ्यां डित् ॥ ७४२ ॥

पर- आङ्पूर्वाभ्यां यथासंख्यं शृखनिभ्यां डिदुः प्रत्ययो भवति ॥ शॄश् हिंसायाम् । पराञ्शृणाति । परशुः कुठारः ॥ खनूग् अवदारणे । आखुर्मूषिकः ॥ ७४२ ॥

शुभेः स च वा ॥ ७४३ ॥

शुभि दीप्तौ । इत्यस्माड्डिदुः प्रत्ययो [ भव ]त्यस्य च दन्त्यः सो वा भवति ॥ सुः शुश्च पूजायाम् । सुपुरुषः । शुनासीरः ॥ ७४३ ॥

द्युद्रुभ्याम् ॥ ७४४ ॥

आभ्यां डिदुः प्रत्ययो भवति ॥ द्युंक् अभिगमे । द्युः स्वर्गक्रीडा स्वर्गश्च ॥ द्रुं गतौ । द्रुर्वृक्षशाखा वृक्षश्च ॥ ७४४ ॥

हरिपीतमितशतविकुकद्रुभ्यो द्रुवः ॥ ७४५ ॥

हरि पीत मित शत वि कु कद् इत्येतेभ्यः परात् द्रुं गतौ । इत्यस्माड्डिदुः प्रत्ययो भवति ॥ हरिद्रुर्वृक्ष ऋषिः पर्वतश्च ॥ पीतद्रुर्देवदारुः ॥ मितद्रुः समुद्रस्तुरंगो मितंगमश्च ॥ शतद्रुर्नाम नदो नदी च ॥ विद्रुर्दारुप्रकारो वृक्षश्च ॥ कुद्रुर्विकलपादः ॥ कद्रुर्नागमाता वह्निजातिर्गृहगोधा वर्णश्च ॥ ७४५ ॥

केवसुभुरण्यध्वर्य्वादयः ॥ ७४६ ॥

केवय्वादयः शब्दा डिदुप्रत्ययान्ता निपात्यन्ते ॥ केवलपूर्वाद्यातेर्लक्लोपश्च । केवलो यातीति केवयुर्ऋषिः ॥ भूपूर्वाद्यातेर्डुरण्यादी भुवं यातीति भुरण्युरग्निः ॥

अध्वरं यातीति पूर्वपदान्त्यलोपे । अध्वर्युर्ऋत्विक् ॥ आदिग्रहणात् चरन्याति । चरण्युर्वायुः ॥ अभिपूर्वस्याश्नातेः । अभीशू रश्मिः ॥ ७४६ ॥

शः सन्वच ॥ ७४७ ॥

शोंच् तक्षणे । इत्यस्माड्डिदुः प्रत्ययो [भवति] स च सन्वत् सन्नीवास्मिन्निति पूर्वस्य च इत्वं भवति ॥ शिशुर्बालः ॥ ७४७ ॥

तनेर्डउः ॥ ७४८ ॥

तनूयी विस्तारे । इत्यस्माड्डिदुः प्रत्ययो [ भवति ] स च सन्वद्भवति ॥ तितउः परिवपनम् ॥ ७४८ ॥

कैशीशमिरमिभ्यः कुः ॥ ७४९ ॥

एभ्यः कुः प्रत्ययो भवति ॥ कैं शब्दे । काकुः स्वरविशेषः ॥ शीङ्क् स्वप्ने । शेकुरब्धिविशेषः ॥ शमूच् उपशमे । शङ्कुः कीलको बाणः शूलमायुधं चिह्नं शलकश्च ॥ रमिं क्रीडायाम् । रङ्कुर्मृगः ॥ ७४९ ॥

ह्रियः किद्रो लश्च वा ॥ ७५० ॥

ह्रींक् लज्जायाम् । इत्यस्मात्किद्रकुः प्रत्ययो [भवति] रेफस्य च लकारो वा भवति ॥ ह्रीकुर्ह्लीकुश्च त्रपु जतुनी लज्जावांश्च ॥ ह्रीकुर्वनमार्जारः ॥ ७५० ॥

किरः ष च ॥ ७५१ ॥

कॄत् विक्षेपे । इत्यस्मात्किद्कुः प्रत्ययो [ भवति ] षकारश्चान्तादेशो भवति ॥ किष्कुरायामानद्रव्यम् ॥ ७५१ ॥

चटिकठिपर्दिभ्य आकुः ॥ ७५२ ॥

एभ्य आकुः प्रत्ययो भवति ॥ चटण् भेदे । चटाकुर्ऋषिः शकुनिश्च ॥ कठ कृच्छ्रजीवने । कठाकुः कुटुम्बपोषकः ॥ पर्दि कुत्सिते शब्दे । पर्दाकुर्भेको वृश्चिकोऽजगरश्च ॥ ७५२ ॥

सिविकुटिकुठिकुकुषिकृषिभ्यः कित् ॥ ७५३ ॥

एभ्यः किदाकुः प्रत्ययो भवति ॥ षिवूच् ऊती । सिवाकुर्ऋषिः ॥ कुटत् कौटिल्ये । कुटाकुर्विटपः ॥ कुठिः सौत्रः । कुठाकुः श्वभ्रः ॥ कुंङ् शब्दे । कुवाकुः पक्षी ॥ कुषश् निष्कर्षे । कुषाकुर्वृश्चिकोऽग्निः परोपतापी च ॥ कृषींत् विलेखने । कृषाकुः कृषीवलः ॥ ७५३ ॥

उपसर्गाच्चोडित् ॥ ७५४ ॥

उपसर्गपूर्वात् चिंगट् चयने । इत्यस्माड्डिदाकुः प्रत्ययो भवति ॥ उपचाकुः संचाकुर्ऋषिः ॥ निचाकुर्निपुण ऋषिश्च ॥ ७५४ ॥

शलेरङ्कुः ॥ ७५५ ॥

शल गतौ । इत्यस्मादङ्कुः प्रत्ययो भवति ॥ शलङ्कुर्ऋषिः ॥ ७५५ ॥

सृपृभ्यां दाकुक् ॥ ७५६ ॥

आभ्यां किदाकुः प्रत्ययो भवति ॥ सृं गतौ । सृदाकुर्दावाग्निर्वायुरादित्यो व्याघ्रः शकुनिरस्तो [भ]र्ता गोधकश्च ॥ पृंक् पालनपूरणयोः । पृदाकुः सर्पो गोधकश्च ॥ ७५६ ॥

इषेः स्वाकुक् ॥ ७५७ ॥

इषत् इच्छायाम् । इत्यस्मात्किःस्वाकुः प्रत्ययो भवति ॥ इक्ष्वाकुरादिक्षत्रियः ॥ ७५७ ॥

फलिवल्यमेर्गुः ॥ ७५८ ॥

एभ्यो गुः प्रत्ययो भवति ॥ फल निष्पत्तौ । फल्ग्वसारम् ॥ वलि संवरणे । वल्गु मधुरं शोभनं च । वल्गुः पक्षी ॥ अम गतौ । अङ्गुः शरीरावयवः ॥ ७५८ ॥

दमेर्लुक् च ॥ ७५९ ॥

दमूं उपशमे । इत्यस्माद्गुः प्रत्ययो [भव] त्यन्त्यस्य च लुग्भवति ॥ दगुर्ऋषिः ॥ ७५९ ॥

हेर्हिन् च ॥ ७६० ॥

हिंट् गतिवृद्धयोः । इत्यस्माद्गुः प्रत्ययो [भव]त्यस्य च हिन् इत्यादेशो भवति ॥ हिङ्गू रामठः ॥ ७६० ॥

प्रीकैपैनीलेरङ्गुक् ॥ ७६१ ॥

एभ्यः किदङ्गुः प्रत्ययो भवति ॥ प्रींग्श् तृप्तिकान्त्योः । प्रियङ्गुः फलिनी रालकश्च ॥ कैं शब्दे । कङ्गुरणुः ॥ पैं शोषणे । पङ्गुः खञ्जः ॥ नील वर्णे । नीलङ्गुः कृमिजातिः शृगालश्च ॥ ७६१ ॥

अव्यर्तिगृभ्योऽदुः ॥ ७६२ ॥

एभ्योऽदुः प्रत्ययो भवति ॥ अव रक्षणादौ । अवदुः कृकाटिका ॥ ऋंक् गतौ । अरदुर्वृक्षः ॥ गॄत् निगरणे । गरदुर्देशविशेषः पक्ष्यजगरश्च ॥ ७६२ ॥

शलेराडुः ॥ ७६३ ॥

शल गतौ । इत्यस्मादाडुः प्रत्ययो भवति ॥ शलाडुः कोमलं फलम् ॥७६३॥

अञ्ज्यवेरिष्णुः ॥ ७६४ ॥

आभ्यामिष्णुः प्रत्ययो भवति ॥ अञ्जौप् व्यक्त्यादौ । अञ्जिष्णुर्भानुरग्निश्च ॥ अव रक्षणादौ । अविष्णुरध्वो होता च ॥ ७६४ ॥

तनिमनिकणिभ्यो डुः ॥ ७६५ ॥

एभ्यो डुः प्रत्ययो भवति ॥ तनूयी विस्तारे । तण्डुः प्रथमः ॥ मनिच् ज्ञाने । मण्डुर्ऋषिः ॥ कण शब्दे । कण्डुर्वेदनाविशेषः ॥ ७६५ ॥

पनेर्दीर्घश्च ॥ ७६६ ॥

पनि स्तुतौ । इत्यस्माड्डुः प्रत्ययो [ भवति ] दीर्घश्च भवति ॥ पाण्डुर्वर्णः क्षत्रियश्च ॥ ७६६ ॥

पलिमृभ्यामाण्डुकण्डुकौ ॥ ७६७ ॥

आभ्यां यथासंख्यमाण्डु कण्डुक इति प्रत्ययौ भवतः ॥ पल गतौ । पलाण्डुर्लशुनभेदः ॥ मृंत् प्राणत्यागे । मृकण्डुक ऋषिः ॥ ७६७ ॥

अजिस्थावृरीभ्यो णुः ॥ ७६८ ॥

एभ्यो णुः प्रत्ययो भवति ॥ अज क्षेपणे च । वेणुर्वंशः ॥ ष्ठां गतिनिवृत्तौ स्थाणुः शिव ऊर्ध्वं च दारु ॥ वृग्ट् वरणे । वर्णुर्नदो जनपदश्च ॥ रींश् गतिरेषणयोः । रेणुर्धूलिः ॥ ७६८ ॥

विषेः कित् ॥ ७६९ ॥

विषूंकी व्याप्तौ । इत्यस्मात्किण्णुः प्रत्ययो भवति ॥ विष्णुर्हरिः ॥७६९॥

क्षिपेरणुक् ॥ ७७० ॥

क्षिपींत् प्रेरणे । इत्यस्मात्किदणुः प्रत्ययो भवति ॥ क्षिपणुः समीरणो विद्युच्च ॥ ७७० ॥

अञ्जेरिष्णुः ॥ ७७१ ॥

अञ्जौप् व्यक्त्यादौ । इत्यस्मात्किदिष्णुः प्रत्ययो भवति ॥ अञ्जिष्णुर्घृतम् ॥ ७७१ ॥

कृहृभूजीविगम्यादिभ्य एणुः ॥ ७७२ ॥

एभ्य एणुः प्रत्ययो भवति ॥ कृंगट् हिंसायाम्। डुकृंग् करणे वा। करेणुर्हस्ती ॥ हृंग् हरणे। हरेणुर्गन्धद्रव्यम् ॥ भू सत्तायाम्। भवेणुर्भव्यः ॥ जीव प्राणधारणे। जीवेणुरौषधम् ॥ गम्लृं गतौ। गमेणुर्गन्ता ॥ आदिग्रहणात् शमूच् उपशमे। शमेणुरुपशमनम् ॥ यजीं देवपूजादौ। यजेणुर्यज्ञादि ॥ डुपचींष् पाके। पचेणुः पाकस्थानम् ॥ पदेणुः। वहेणुरित्यादि ॥ ७७२ ॥

कृसिकम्यमिगमितनिमनिजन्यसिमसिसच्यविभाधागाग्लाम्लाहन्-
हायाहिकुशिपूभ्यस्तुन् ॥ ७७३ ॥

एभ्यस्तुन् प्रत्ययो भवति ॥ डुकृंग् करणे। कर्तुः कर्मकरः ॥ षिंगट् बन्धने। सेतुर्नदीसंक्रमः ॥ कमूङ् कान्तौ। कन्तुः कन्दर्पः कामी मनः कुसूलश्च ॥ अम गतौ। अन्तू रक्षिता लक्षणं च ॥ गम्लृं गतौ। गन्तुः पथिकः। आगन्तुरवास्तव्यो जनः ॥ तनूयी विस्तारे। तन्तुः सूत्रम् ॥ मनिंच् ज्ञाने। मन्तुर्वैमनस्यं प्रियंवदो मानश्च ॥ जनैचि प्रादुर्भावे। जन्तुः प्राणी ॥ असक् भुवि। अस्तुरस्तिभावः। बाहुलकाद्भूभावाभावः ॥ मसैच् परिणामे। मस्तुर्दधिमूलवारि ॥ षचि सेचने। सक्तुर्यवविकारः ॥ अव रक्षणादौ। ओतुर्बिडालः ॥ भांक् दीप्तौ। भातुर्दीप्तिमाञ्शरीरावयवोर्मिर्विद्वांश्च ॥ डुधांग्क् धारणे च। धातुर्लोहादि रसादिः शब्दप्रकृतिश्च ॥ गैं शब्दे। गातुर्गायन उद्गाता च ॥ ग्लैं हर्षक्षये। ग्लातुः सरुजः ॥ म्लैं गात्रविनामे। म्लातुर्दीनः ॥ हनंक् हिंसागत्योः। हन्तुरायुधं हिमश्च ॥ ओहांक् त्यागे। हातुर्मृत्युर्मार्गश्च ॥ यांक् प्रापणे। यातुः पाप्मा जनो राक्षसश्च ॥ हिंट् गतिवृद्ध्योः। हेतुः कारणम् ॥ कुशं आह्वानरोदनयोः। क्रोष्टा सृगालः ॥ पूगूश् पवने। पोतुः पविता ॥ नित्करणं कुशस्तुनस्तृच् पुंसीत्यत्र विशेषणार्थम् ॥ ७७३ ॥

वसेर्णिद्वा ॥ ७७४ ॥

वसं निवासे। इत्यस्मात्तुन् प्रत्ययो [भवति] स च णिद्वा भवति ॥ वास्तु गृहं गृहभूमिश्च ॥ वस्तु सन्निवेशभूमिश्च ॥ ७७४ ॥

पः पीप्यौ च वा ॥ ७७५ ॥

पां पाने। इत्यस्मात्तुन् प्रत्ययो [भव]त्यस्य च पी पि इत्यादेशौ वा भवतः। पीतुरादित्यश्चन्द्रो हस्ती कालश्चक्षुर्बालघृतपानभाजनं च ॥ पितुः प्रजापतिराहारश्च ॥ पातू रक्षिता ब्रह्मा च ॥ ७७५ ॥

आपोप् च ॥ ७७६ ॥

आपॢंट् व्याप्तौ । इत्यस्मात्तुन् प्रत्ययो [भव]त्यस्य च अप् इत्यादेशो भवति ॥ अप्तुर्देवताविशेषः कालो याजको यज्ञयोनिश्च ॥ ७७६ ॥

अञ्ज्यर्तेः कित् ॥ ७७७ ॥

आभ्यां कित्तुन् प्रत्ययो भवति ॥ अञ्जौप् व्यक्त्यादिषु । अक्तुरिन्द्रो विष्णू रात्रिश्च ॥ ऋंक् गतौ । ऋतुर्हेमन्तादिः स्त्रीरजस्तत्कालश्च ॥ ७७७ ॥

चायः के च ॥ ७७८ ॥

चायृग् पूजानिशामनयोः । इत्यस्मात्तुन् प्रत्ययो भवत्यस्य च के इत्यादेशो भवति ॥ केतुर्ध्वजो ग्रहश्च ॥ ७७८ ॥

वहिमहिगुह्येधिभ्योतुः ॥ ७७९ ॥

एभ्योतुः प्रत्ययो भवति ॥ वहीं प्रापणे । वहतुर्विवाहोनड्वानग्निः कालश्च ॥ मह पूजायाम् । महतुरग्निः ॥ गुहौग् संवरणे । गुहतुर्भूमिः ॥ एधि वृद्धौ । एधतुर्लक्ष्मीः पुरुषोग्निश्च ॥ ७७९ ॥

कृलाभ्यां कित् ॥ ७८० ॥

आभ्यां कित्तुः प्रत्ययो भवति ॥ डुकृंग् करणे । क्रतुर्यज्ञः ॥ लांक् आदाने । लतुः पाशः ॥ ७८० ॥

तनेर्यतुः ॥ ७८१ ॥

तनूयी विस्तारे । इत्यस्माद्यतुः प्रत्ययो भवति ॥ तन्यतुर्विस्तारो वायुः पर्वतः सूर्यश्च ॥ ७८१ ॥

जीवेरातुः ॥ ७८२ ॥

जीव प्राणधारणे । इत्यस्मादातुः प्रत्ययो भवति ॥ जीवातुर्जीवितमौषधमन्नमुदकं द्रव्यं च ॥ ७८२ ॥

यमेर्दुक् ॥ ७८३ ॥

यमूं उपरमे । इत्यस्मात्कितुः प्रत्ययो भवति ॥ यतुः क्षत्रियः ॥७८३॥

शीङो धुक् ॥ ७८४ ॥

शीङ्क् स्वप्ने । इत्यस्मात्कित् धुः प्रत्ययो भवति ॥ शीधु मद्यविशेषः ॥ ७८४ ॥

धूगो धुन् च ॥ ७८५ ॥

धुगृंश् कम्पने । इत्यस्मात् धुक् प्रत्ययो [भव]त्यस्य च धुन् इत्यादेशो भवति ॥ धुन्धुर्दानवः ॥ ७८५ ॥

दाभाभ्यां नुः ॥ ७८६ ॥

आभ्यां नुः प्रत्ययो भवति ॥ डुदांग्क् दाने । दानुर्गन्ता यजमानो वायुरादित्यो दक्षिणार्थं च धनम् ॥ भांक् दीप्तौ । भानुः सूर्यो रश्मिश्च । चित्रभानुरग्निः। स्वर्भानू राहुः । विश्वभानुरादित्यः ॥ ७८६ ॥

धेः शित् ॥ ७८७ ॥

ट्धें पाने। इत्यस्मान्नुः प्रत्ययो [भवति] स च शिद्भवति ॥ धेनुरभिनवप्रसवा गवादिः ॥ शित्वादात्संध्यक्षरस्येत्याकारो न भवति ॥ ७८७ ॥

सुवः कित् ॥ ७८८ ॥

षूङौक् प्राणिगर्भविमोचने । इत्यस्मात्किन्नुः प्रत्ययो भवति ॥ सूनुः पुत्रः ॥ ७८८ ॥

हो जह् च ॥ ७८९ ॥

ओहांक् त्यागे । इत्यस्मान्नुः प्रत्ययो [ भव ] त्यस्य च जह् इत्यादेशो भवति ॥ जह्नुर्गङ्गापिता ॥ ७८९ ॥

वचेः कगौ च ॥ ७९० ॥

वचंक् भाषणे । इत्यस्मान्नुः प्रत्ययो [ भवति ] ककारगकारौ चान्तादेशौ भवतः ॥ वक्नुर्वग्नुश्च वाग्मी ॥ ७९० ॥

कृहनेस्तुक्नुकौ ॥ ७९१ ॥

आभ्यां कितौ तु नु इति प्रत्ययौ भवतः ॥ डुकृंग् करणे । कृतुः कर्मकरः । कृणुः कोशकारः कारुश्च ॥ हनंक् हिंसागत्योः । हतुर्हिमः ॥ हनुर्वक्त्रैकदेशः बाहुलकान्नलोपः ॥ ७९१ ॥

गमेः सन्वच्च ॥ ७९२ ॥

गमॢं गतौ । इत्यस्मात्तुक्नुकौ सन्वच्च भवतः ॥ जिगन्तुर्ब्राह्मणो दिवसो मार्गः प्राणोग्निश्च ॥ जिगत्नुः प्राणो बाणो मनो मीनो वायुश्च ॥ ७९२ ॥

दाभूक्षण्वुन्दिनदिवदिपत्यादेरनुङ् ॥ ७९३ ॥

एभ्यो ङिदनुः प्रत्ययो भवति ॥ डुदांग्क् दाने । दनुर्दानवमाता ॥ भू सत्तायाम् । भुवनुर्मेघश्चन्द्रो भवितव्यता हंसश्च ॥ क्षणूग् हिंसायाम् । क्षणनुर्याया-

वरः ॥ उन्दैप् क्लेदने । उन्दनुः शुकः ॥ णद् अव्यक्ते शब्दे । नदनुर्मेघः सिंहश्च ॥ वद व्यक्तायां वाचि । वदनुर्वक्ता ॥ पत्लृ गतौ । पतनुः श्येनः ॥ आदिग्रहणादन्येपि ॥ कित्त्वमकृत्वा ङित्करणं वदेर्वृद्ध्यभावार्थम् ॥ ७९३ ॥

कृशेरानुक् ॥ ७९४ ॥

कृशच् तनुत्वे । इत्यस्मात्किदानुः प्रत्ययो भवति ॥ कृशानुर्वह्निः॥७९४॥

जीवे रदानुक् ॥ ७९५ ॥

जीवं प्राणधारणे । इत्यस्मात्किद्रदानुः प्रत्ययो भवति ॥ जीरदानुः ॥ कित्करणं गुणप्रतिषेधार्थम् । वलोपे हि नाम्यन्तत्वाद्गुणः स्यात् ॥ ७९५ ॥

वचेरक्नुः ॥ ७९६ ॥

वचंक् भाषणे । इत्यस्मादक्नुः प्रत्ययो भवति ॥ वचक्नुर्वाग्म्याचार्यो ब्राह्मण ऋषिश्च ॥ ७९६ ॥

हृषिपुषिघुषिगदिमदिनन्दिगडिमण्डिजनिस्तनिभ्यो णेरित्नुः ॥ ७९७ ॥

एभ्यो ण्यन्तेभ्य इत्नुः प्रत्ययो भवति ॥ हृषच् तुष्टौ । हृषू अलीके वा । हर्षयित्नुरानन्दः स्वजनो रङ्गोपजीवी प्रियंवदश्च ॥ पुषंच् पुष्टौ । पोषयित्नुर्भर्ता मेघः कोकिलश्च ॥ घुषृण् विशब्दने । घोषयित्नुः कोकिलः शब्दश्च ॥ गदण् गर्जे । गदयित्नुः पर्जन्यो वावदूको भ्रमरः कामश्च ॥ मदैच् हर्षे । मदयित्नुर्मदिरा सुवर्णमलंकारश्च ॥ टुनदु समृद्धौ । नन्दयित्नुः पुत्र आनन्दः प्रमुदितश्च ॥ गड सेचने । गडयित्नुर्बलाहकः ॥ मडु भूषायाम् । मण्डयित्नुर्मण्डयिता कामुकश्च ॥ जनैचि प्रादुर्भावे । जनयित्नुः पिता ॥ स्तनण् गर्जे । स्तनयित्नुर्मेघो मेघगर्जितं च ॥७९७॥

कस्यर्तिभ्यामिपुक् ॥ ७९८ ॥

आभ्यां किदिपुः प्रत्ययो भवति ॥ कस गतौ । कसिपुरशनम् ॥ ऋक् गतौ । रिपुः शत्रुः ॥ ७९८ ॥

कम्यमिभ्यां बुः ॥ ७९९ ॥

आभ्यां बुः प्रत्ययो भवति ॥ कमूङ् कान्तौ । कम्बुः शङ्खः ॥ अम गतौ । अम्बु पानीयम् ॥ ७९९ ॥

अभ्रेरमुः ॥ ८०० ॥

अभ्र गतौ । इत्यस्मादमुः प्रत्ययो भवति ॥ अभ्रमुर्देवहस्तिनी ॥ ८००॥

यजिशुन्धिदहिदसिजनिमनिभ्यो युः ॥ ८०१ ॥

एभ्यो युः प्रत्ययो भवति ॥ यजीं देवपूजादौ । यज्युरग्निरध्वर्युर्यज्वा शिष्यश्च ॥ शुन्ध शुद्धौ । शुन्ध्युरग्निरादित्यः पवित्रं च ॥ दहं भस्मीकरणे । दह्युरग्निः ॥ दसूच् उपक्षये । दस्युश्चौरः ॥ जनैचि प्रादुर्भावे । जन्युरपत्यं पिता वायुः प्रादुर्भावः प्रजापतिः प्राणी च ॥ मनिंच् ज्ञाने । मन्युः कृपा क्रोधः शोकः क्रतुश्च ॥ ८०१ ॥

भुजेः कित् ॥ ८०२ ॥

भुजंप् पालनाभ्यवहारयोः । इत्यस्मात्किद्युः प्रत्ययो भवति ॥ भुज्युरग्नि-रादित्यो गरुडो भोग ऋषिश्च ॥ ८०२ ॥

सर्त्तेरय्वन्यू ॥ ८०३ ॥

सृं गतौ । इत्यस्मादयु अन्यु इति प्रत्ययौ भवतः ॥ सरयुर्नदी वायुश्च ॥ दीर्घान्तमिममिच्छन्त्येके । सरयूः । श्लिष्टनिर्देशात्तदपि संगृहीतमेव ॥ सरण्युर्मेघोऽश्वि-नोर्माता समेघो वायुश्च ॥ ८०३ ॥

भूक्षिपिचरेरन्युक् ॥ ८०४ ॥

एभ्यः किदन्युः प्रत्ययो भवति ॥ भू सत्तायाम् । भुवन्युरीश्वरोऽग्निश्च ॥ क्षिपींत् प्रेरणे । क्षिपण्युर्वायुर्वसन्तो विद्युद[र्थः] कालश्च ॥ चर भक्षणे । चरण्युर्वायुः ॥ ८०४

मृत्युक् ॥ ८०५ ॥

मृंत् प्राणत्यागे । इत्यस्मात्कित्युः प्रत्ययो भवति ॥ मारयतीति मृत्युः कालो मरणं च ॥ ८०५ ॥

चिनीपीम्यशिभ्यो रुः ॥ ८०६ ॥

एभ्यो रुः प्रत्ययो भवति ॥ चिगट् चयने । चेरुर्मुनिः ॥ णींग् प्रापणे । नेरुर्जनपदः ॥ पींङ्च् पाने । पेरुः सूर्यो गिरिः कलविङ्कश्च ॥ मींङ्च् हिंसाया-म् । मेरुर्देवाद्रिः ॥ अशौटि व्याप्तौ । अश्रु नेत्रजलम् ॥ ८०६ ॥

रुपूभ्यां कित् ॥ ८०७ ॥

आभ्यां किद्रुः प्रत्ययो भवति ॥ रुक् शब्दे । रुरुर्मृगजातिः ॥ पूग्श् पवने । पूरू राजा ॥ ८०७ ॥

खनो लुक् च ॥ ८०८ ॥

खनूग् अवदारणे । इत्यस्मादुः प्रत्ययो [भवति] नस्य च लुग्भवति ॥ खरु-र्दर्पः क्रूरो मूर्खो दमो गीतविशेषश्च ॥ ८०८ ॥

जनिहनिशाम्यर्तेस्त च ॥ ८०९ ॥

एभ्यो रुः प्रत्ययो भवत्यन्त्यस्य च तकारादेशो भवति ॥ जनैचि प्रादुर्भावे । जत्रुः शरीरावयवो मेघो घर्मावसानं च ॥ हनंक् हिंसागत्योः । हत्रुर्हिंस्रः ॥ शद्लृ शातने । शत्रु रिपुः । बाहुलकात्तादेशस्य विकल्पे । शद्रुः पुरुषः ॥ ऋंक् गतौ । अत्रुः क्षुद्रजन्तुः ॥ ८०९ ॥

श्मनः शीङो डित् ॥ ८१० ॥

श्मन्पूर्वात् शीङ्क् स्वप्ने । इत्यस्माड्डितुः प्रत्ययो भवति ॥ श्मश्रुर्मु-खलोमानि ॥ ८१० ॥

शिग्रुगेरुनमेर्वादयः ॥ ८११ ॥

शिग्र्वादयः शब्दा रुप्रत्ययान्ता निपात्यन्ते ॥ शिगृट् निशाने । किद्गोन्तश्च । शिग्रुः शोभाञ्जनको हरितकविशेषश्च ॥ गिरतेरेच्च ॥ गेरुर्धातुः ॥ नमेर्नञ्पूर्वस्य मयतेर्वा । एत्वान्तः । नमेरुर्देववृक्षः ॥ आदिग्रहणादन्येपि ॥ ८११ ॥

कटिकुटयर्तेररुः ॥ ८१२ ॥

एभ्योरुः प्रत्ययो भवति ॥ कटे वर्षावरणयोः । कटरुः शकटम् ॥ कुटत् कौटिल्ये । कुटरुः पक्षिविशेषो मर्कटो वृक्षो वर्धकिश्च ॥ कुटादित्वान्न गुणः ॥ ऋंक् गतौ । अररुरसुर आयुधं मण्डलं च ॥ ८१२ ॥

कर्केरारुः ॥ ८१३ ॥

कर्केः सौत्रादारुः प्रत्ययो भवति ॥ कर्कारुः क्षुद्रचिर्भिटी ॥ ८१३ ॥

उर्वेरादेरूदेतौ च ॥ ८१४ ॥

उर्वै हिंसायाम् । इत्यस्मादारुः प्रत्ययो भवत्यादेश्च ऊकार एकार आदेशौ भवतः ॥ ऊर्वारुः कटुचिर्भिटी ॥ एर्वारुश्चारुचिर्भिटी ॥ ८१४ ॥

कृपिक्षुधिपीकुणिभ्यः कित् ॥ ८१५ ॥

एभ्यः किदारुः प्रत्ययो भवति ॥ कृपौङ् सामर्थ्ये । कृपारुर्दयाशीलः ॥ क्षुधंच् बुभुक्षायाम् । क्षुधारुः क्षुधमसहमानः । लत्वे । कृपालुः । क्षुधालुः ॥ पींङ्च् पाने । पियारुर्वृक्षः ॥ कुणत् शब्दोपकरणयोः । कुणारुर्वनस्पतिः ॥ ८१५ ॥

इयः शीत च ॥ ८१६ ॥

इर्यैङ् गतौ । इत्यस्मादारुः प्रत्ययो [भव]त्यस्य च शीत इत्यादेशो भवति ॥ शीतारुः शीतासहः । लस्वे । शीतालुः ॥ ८१६ ॥

तुम्बेरुरुः ॥ ८१७ ॥

तुबु अर्दने । इत्यस्मादुरुः प्रत्ययो भवति ॥ तुम्बुरुर्गन्धर्वो गन्धद्रव्यं च ॥ ८१७ ॥

कन्देः कुन्द च ॥ ८१८ ॥

कदु रोदनाह्वानयोः । इत्यस्मादुरुः प्रत्ययो [भव]त्यस्य च कुन्द इत्यादेशो भवति ॥ कुन्दुरुः सल्लकीनिर्यासः ॥ ८१८ ॥

चमेरूरुः ॥ ८१९ ॥

चमू अदने । इत्यस्मादूरुः प्रत्ययो भवति ॥ चमूरुश्चित्रकः ॥ ८१९ ॥

शीङो लुः ॥ ८२० ॥

शीङ्क् स्वप्ने । इत्यस्माल्लुः प्रत्ययो भवति ॥ शेलुः श्लेष्मातकः ॥८२०॥

पीङः कित् ॥ ८२१ ॥

पीङ्च् पाने । इत्यस्मात्किल्लुः प्रत्ययो भवति ॥ पीलुर्हस्ती वृक्षश्च॥८२१॥

लस्जीर्ष्यशलेरालुः ॥ ८२२ ॥

एभ्य आलुः प्रत्ययो भवति ॥ ओलस्जैति व्रीडे । लज्जालुर्लज्जनशीलः ॥ ईर्ष्य ईर्ष्यार्थः । ईर्ष्यालुरीर्ष्याशीलः ॥ शल गतौ । शलालुर्वृक्षावयवः ॥८२१॥

आपोप् च ॥ ८२३ ॥

आप्लृंट् व्याप्तौ । इत्यस्मादालुः प्रत्ययो [भव]त्यस्य च अप् इत्यादेशो भवति ॥ अपालुर्वायुः ॥ ८२३ ॥

गूहलुगुग्गुलुकमण्डलवः ॥ ८२४ ॥

एत आलुप्रत्ययान्ता निपात्यन्ते ॥ गूहतेर्ह्रस्वश्च प्रत्ययादेः । गूहलुर्ऋषिः॥ गुंङ् शब्दे । अस्याद्वेर्गुग्गुलोपश्च प्रत्ययादेः । गुग्गुलुर्वृक्षविशेषोऽश्च ॥ कम्पूर्वा-दनितेर्डोन्तो ह्रस्वश्च प्रत्ययादेः । कमण्डलुरमत्रम् ॥ ८२४ ॥

पः शुः ॥ ८२५ ॥

पृंश् पालनपूरणयोः । इत्यस्मात् शुः प्रत्ययो भवति ॥ पर्शुर्वङ्क्रिसंज्ञं वक्षास्थि ॥ ८२५ ॥

मस्जीष्यशिभ्यः सुक् ॥ ८२६ ॥

एभ्यः किरखुः प्रत्ययो भवति ॥ टुमस्जोंत् शुद्धौ । मस्जेः स इति नोन्तः । मङ्क्षुर्मुनिः ॥ इषश् आभीक्ष्ण्ये । इक्षुर्गुडादिप्रकृतिः ॥ अशौटि व्याप्तौ । अक्षुः समुद्रो वप्रश्च ॥ ८२६ ॥

तॄपल्लिमल्लेरक्षुः ॥ ८२७ ॥

एभ्योक्षुः प्रत्ययो भवति ॥ तॄ प्लवनतरणयोः । तरक्षुः श्वापदविशेषः ॥ पल गतौ । मलि धारणे । पल्लक्षुर्मलक्षुश्च वृक्षः ॥ ८२७ ॥

उलेः कित् ॥ ८२८ ॥

उल दाहे । इत्यस्मात्सौत्रात्किदक्षुः प्रत्ययो भवति ॥ उलक्षुस्तृणजातिः ॥ ८२८ ॥

कृषिचमितनिधन्यन्दिसर्जिखर्जिभर्जिलस्जीर्ष्यिभ्य ऊः ॥ ८२९ ॥

एभ्य ऊः प्रत्ययो भवति ॥ कृषींत् विलेखने । कर्षूः कुल्याङ्गारः परिखा गर्तश्च ॥ चमू अदने । चमूः सेना ॥ तनूयी विस्तारे । तनूः शरीरम् ॥ धन शब्दे । धन धान्ये सौत्रो वा । धनूर्धान्यराशिर्ज्या वरारोहा च स्त्री ॥ अदु बन्धने । अन्दूः पादकटकः ॥ सर्ज अर्जने । सर्जूर [र्धिः] क्षारो वनस्पतिर्वणिक् च ॥ खर्ज मार्जने च । खर्जूः कण्डूर्विद्युच्च ॥ भृजैङ् भर्जने । भ्रस्जींत् पाके वा । भर्जूर्यवविकारः ॥ ओलस्जैति व्रीडे । लज्जूर्लज्जालुः ॥ ईर्ष्य ईर्ष्यार्थः । ईर्ष्यूरीर्ष्यालुः ॥८२९॥

फलेः फेल् च ॥ ८३० ॥

फल निष्पत्तौ । इत्यस्मादूः प्रत्ययो भवति धातोश्च फेल् इत्यादेशो भवति ॥ फेलूर्रोमविशेषः ॥ ८३० ॥

कषेर्ण्डच्छौ च षः ॥ ८३१ ॥

कष हिंसायाम् । इत्यस्मादूः प्रत्ययो भवति षकारस्य च ण्डच्छश्चादेशौ भवतः ॥ कण्डूः कच्छूश्च पामा ॥ ८३१ ॥

वहेर्ध च ॥ ८३२ ॥

वहीं प्रापणे । इत्यस्मादूः प्रत्ययो [भवति] धकारश्चान्तादेशो भवति ॥ वधूः पतिमुपसंपन्ना कन्या जाया च ॥ ८३२ ॥

मृजेर्गुणश्च ॥ ८३३ ॥

मृजौक् शुद्धौ । इत्यस्मादूः प्रत्ययो [भवति] गुणश्चास्य भवति ॥ मर्जूः

शुद्धी रजकौ नद्यास्तीरं शिला च ॥ गुणे सिद्धे गुणवचनमकारस्य वृद्धिबाधनार्थम् ॥ ८३३ ॥

अजेर्जोन्तश्च ॥ ८३४ ॥

अज क्षेपणे च । इत्यस्मादुः प्रत्ययो [ भवति ] जकारश्चान्तो भवति ॥ अज्जूर्जननी ॥ ८३४ ॥

कसिपद्यर्त्यादिभ्यो णित् ॥ ८३५ ॥

एभ्यो णिदुः प्रत्ययो भवति ॥ कस गतौ । कासूः शक्तिर्नामायुधं वाग्विकलो बुद्धिर्व्याधिर्विकला च वाक् ॥ पदिंच् गतौ । पादुः पादुका ॥ ऋक् गतौ । आरुर्वृक्षविशेषः कच्छूर्गतिः पिङ्गलश्च ॥ आदिग्रहणात् कचतेः । काचूः । शलतेः । शालूरित्यादयोपि ॥ ८३५ ॥

अणेर्डोन्तश्च ॥ ८३६ ॥

अणेर्धातोर्णिदुः प्रत्ययो भवति डश्चान्तो भवति ॥ अण शब्दे । आण्डूर्जलभृङ्गारः ॥ ८३६ ॥

अडो ल च वा ॥ ८३७ ॥

अड उद्यमे । इत्यस्माण्णिदुः प्रत्ययो भवति लकारश्चान्तादेशो वा भवति ॥ आलूर्भृङ्गारः करकश्च ॥ आडूर्दर्वी टिट्टिभो वनस्पतिर्जलाधारभूमिः पादभेदनं च ॥ ८३७ ॥

नञो लम्बेर्नलुक् च ॥ ८३८ ॥

नञ्पूर्वात् लबुङ् अवस्रंसने च । इत्यस्माण्णिदुः प्रत्ययो भवति नकारस्य च लुग्भवति ॥ अलाबूस्तुम्बी ॥ ८३८ ॥

कफादीरेर्ल च ॥ ८३९ ॥

कफपूर्वात् ईरिक् गतिकम्पनयोः । इत्यस्मादुः प्रत्ययो भवति लश्चान्तादेशो भवति ॥ कफेलूः श्लेष्मातको यवलाजा मधुपर्कं छादिषेयं च तृणम् ॥ ८३९ ॥

ऋतो रत च ॥ ८४० ॥

ऋत घृणागतिस्पर्धेषु । इत्यस्मादुः प्रत्ययो [ भवति ] रत इति चास्यादेशो भवति ॥ रतूर्नदीविशेषः सत्यवाग्दूतः कृमिविशेषश्च ॥ ८४० ॥

दृभिचपेः स्वराच्चोन्तश्च ॥ ८४१ ॥

आभ्यामूः प्रत्ययो भवति स्वराच्च परो नोन्तो भवति ॥ दृभैत् ग्रन्थे । दृन्भूः सर्पजातिर्वनस्पतिर्वंशो मन्थकारो दर्भणं च । बाहुलकान्नकारस्य न्नां धुट्वर्गेन्त्योपदान्त इति न भवति ॥ चप सान्त्वने । चम्पूः कथाविशेषः ॥ ८४१ ॥

धृषेर्दिधिषदिधीषौ च ॥ ८४२ ॥

ञिधृषाट् प्रागल्भ्ये । इत्यस्मादूः प्रत्ययो [ भवति ] दिधिष् दिधीष् इत्येतावादेशावस्य भवतः ॥ दिधिषूर्ज्यायस्याः पूर्वपरिणीता पुंश्चली च ॥ दिधीषूरूढायाः कनिष्ठाया अनूढा ज्येष्ठा पुनर्भूराहुतिश्च ॥ ८४२ ॥

भ्रमिगमितानिभ्यो डित् ॥ ८४३ ॥

एभ्यो डिदूः प्रत्ययो भवति ॥ भ्रमूच् अनवस्थाने । भ्रूरक्ष्णोरुपरि रोमराजिः ॥ गम्लृं गतौ । अग्रे गच्छति । अग्रेगूः पुरःसरः ॥ तनूयी विस्तारे । कुत्सितं तन्यते । कुतूश्चर्ममयमावपनम् ॥ ८४३ ॥

नृतिशृधिरुषिकुहिभ्यः कित् ॥ ८४४ ॥

एभ्यः किदूः प्रत्ययो भवति ॥ नृतैच् नर्तने । नृतूर्नर्तकः कृमिजातिः प्लवः प्रतिकृतिश्च ॥ शृधुङ् शब्दकुत्सायाम् । शृधूः शर्धनः कृमिजातिरपानं बलिश्च दानवः॥ रुषच् रोषे । रुषूर्भर्त्सकः ॥ कुहणि विस्मापने । कुहूरमावास्या ॥८४४॥

तॄखडिभ्यां डूः ॥ ८४५ ॥

आभ्यां डूः प्रत्ययो भवति ॥ तॄ प्लवनतरणयोः । तर्डूर्द्रोणी प्लवः परिवेषणभाण्डं च ॥ खडण् भेदे । खड्डूर्बालानामुपकरणं स्त्रीणां पादाङ्गुष्ठाभरणं च ॥ ८४५ ॥

तॄदॄभ्यां दूः ॥ ८४६ ॥

आभ्यां दूः प्रत्ययो भवति ॥ तॄ प्लवनतरणयोः । तर्दूर्दर्वी ॥ दॄश् [विदारणे]। दर्दूः कुष्ठभेदः ॥ ८४६ ॥

कमिजनिभ्यां बूः ॥ ८४७ ॥

आभ्यां बूः प्रत्ययो भवति ॥ कमूङ् कान्तौ । कम्बूर्भूषणमादर्शत्सरुः कुरुविन्दश्च ॥ जनैचि प्रादुर्भावे । जम्बूर्वृक्षजातिः ॥ ८४७ ॥

शकेरन्धूः ॥ ८४८ ॥

शकॢट् शक्तौ । इत्यस्मादन्धूः प्रत्ययो भवति ॥ शकन्धूर्वनस्पतिर्देवताविशेषश्च ॥ ८४८ ॥

कृगः कादिः ॥ ८४९ ॥

डुकृंग् करणे । इत्यस्मात्ककारादिरन्धूः प्रत्ययो भवति ॥ कर्कन्धूर्बदरी व्रणं यवलाजा मधुपर्कं विष्टम्भश्च ॥ ८४९ ॥

योरागूः ॥ ८५० ॥

युक् मिश्रणे । इत्यस्मादागूः प्रत्ययो भवति ॥ यवागूर्द्रवौदनः ॥ ८५० ॥

काच्छीङो डेरूः ॥ ८५१ ॥

कपूर्वात् शीङ्क् स्वप्ने । इत्यस्माड्डेरूः प्रत्ययो भवति ॥ कशेरूः कन्दविशेषो वीरुच्च ॥ ८५१ ॥

दिव ऋः ॥ ८५२ ॥

दिवूच् क्रीडादौ । इत्यस्मादृः प्रत्ययो भवति ॥ देवा देवरः पितृव्यश्च भिश्च ॥ ८५२ ॥

सोरसेः ॥ ८५३ ॥

सुपूर्वात् असूच् क्षेपणे। इत्यस्मादृः प्रत्ययो भवति॥ स्वसा भगिनी॥८५३॥

नियो डित् ॥ ८५४ ॥

णींग् प्रापणे । इत्यस्माड्डिदृः प्रत्ययो भवति ॥ ना पुरुषः ॥ ८५४ ॥

सव्यात्स्थः ॥ ८५५ ॥

सव्यपूर्वात् ष्ठां गतिनिवृत्तौ । इत्यस्माड्डिदृः प्रत्ययो भवति ॥ सव्येष्ठा सारथिः ॥ ८५५ ॥

यतिननन्दिभ्यां दीर्घश्च ॥ ८५६ ॥

यतेः नञ्पूर्वात् नन्देश्च ऋः प्रत्ययो [भव]त्यनयोश्च दीर्घो भवति ॥ यतैङ् प्रयत्ने । याता पतिभ्रातृभगिनी देवरभार्या ज्येष्ठभार्या च ॥ टुनदु समृद्धौ। ननान्दा भर्तृभगिनी ॥ नखादित्वान्नञो न भवति ॥ ८५६ ॥

शासिशंसिनीरुक्षुहृभृधृमन्यादिभ्यस्तृः ॥ ८५७ ॥

एभ्यस्तृः प्रत्ययो भवति ॥ शासूक् अनुशिष्टौ । शास्ता गुरू राजा च। प्रशास्ता राजर्त्विक् च ॥ शंसू स्तुतौ च ! शंस्ता स्तोता ॥ णींग् प्रापणे । नेता सारथिः ॥ रुक् शब्दे । रोता मेघः ॥ टुक्षुक् शब्दे । क्षोता मुसलम् ॥ हृंग् हरणे । हर्ता चौरः ॥ डुडुभृंग्क् पोषणे च । भर्ता पतिः ॥ धृंङ् अवध्वंसने ॥ धर्ता धर्मः ॥ मनिच् ज्ञाने । मन्ता विद्वान्प्रजापतिश्च ॥ आदिग्रहणात् उपद्रष्टर्त्विक् । विशस्ता घातक इत्यादयोपि ॥ ८५७ ॥

पातेरिच ॥ ८५८ ॥

पांक् रक्षणे । इत्यस्मात्तृः प्रत्ययो भवति धातोश्च इकारान्तादेशो भवति ॥ पिता जनकः ॥ ८५८ ॥

मानिभ्राजेर्लुक् च ॥ ८५९ ॥

आभ्यां तृः प्रत्ययो [भवति] लुक् चान्तस्य भवति ॥ मानि पूजायाम् । माता जननी ॥ भ्राजि दीप्तौ । भ्राता सोदर्यः ॥ ८५९ ॥

जाया मिगः ॥ ८६० ॥

जाशब्दपूर्वात् डुमिंगट् प्रक्षेपणे । इत्यस्मात्तृः प्रत्ययो भवति ॥ जायां प्रजायां मिन्वन्ति तमिति जामाता दुहितृपतिः ॥ ८६० ॥

आपोप् च ॥ ८६१ ॥

आप्लृंट् व्याप्तौ । इत्यस्मात्तृः प्रत्ययो भवत्यप् चास्यादेशो [भवति] ॥ अप्ता यशोभिश्च ॥ ८६१ ॥

नमेः प् च ॥ ८६२ ॥

णमं प्रह्वत्वे । इत्यस्मात्तृः प्रत्ययो भवति पकारश्चान्तादेशो भवति ॥ नप्ता दुहितुः पुत्रस्य वा पुत्रः ॥ ८६२ ॥

हुपूगोन्नीप्रस्तुप्रतिहृप्रतिप्रस्थाभ्य ऋत्विजि ॥ ८६३ ॥

एभ्य ऋत्विज्यभिधेये तृः प्रत्ययो भवति ॥ हुंक् दानादनयोः । होता ॥ पूग्श् पवने । पोता ॥ गैं शब्दे । णींग् प्रापणे । उत्पूर्वः । उद्गाता । उन्नेता ॥ ष्टुंग्क् स्तुतौ । प्रपूर्वः । प्रस्तोता ॥ हृंग् हरणे । प्रतिपूर्वः । प्रतिहर्ता ॥ ष्ठां गतिनिवृत्तौ । प्रति[प्र]पूर्वः । प्रतिप्रस्थाता ॥ एत ऋत्विजः ॥ ८६३ ॥

नियः षादिः ॥ ८६४ ॥

णींग् प्रापणे । इत्यस्मात् षकारादिस्तृः प्रत्ययो भवत्यृत्विज्यभिधेये ॥ नेष्टर्त्विक् ॥ ८६४ ॥

त्वष्टृक्षत्तृदुहित्रादयः ॥ ८६५ ॥

एते तृप्रत्ययान्ता निपात्यन्ते ॥ त्विषेरितोत्व । त्वष्टा देववर्धकिः प्रजापतिरादित्यश्च ॥ क्षद खदने । इति सौत्रः । क्षत्ता नियुक्तोविनीतो दौवारिको मुसलः पारशवो रुद्रः सारथिश्च ॥ दुहेरिट् किच्च । दुहिता तनया ॥ आदिग्रहणादन्येऽपि ॥ ८६५ ॥

रातेर्डैः ॥ ८६६ ॥

राँक् दाने। इत्यस्माड्डैः प्रत्ययो भवति ॥ राः द्रव्यम्। रायौ। रायः ॥ ८६६ ॥

द्युगमिभ्यां डोः ॥ ८६७ ॥

आभ्यां डिदोः प्रत्ययो भवति ॥ द्युंक् अभिगमे। द्यौः स्वर्गोन्तरिक्षं च ॥ गम्लुं गतौ। गौः पृथिव्यादि ॥ ८६७ ॥

ग्लानुदिभ्यां डौः ॥ ८६८ ॥

आभ्यां डिदौः प्रत्ययो भवति ॥ ग्लैं हर्षक्षये। ग्लौश्चन्द्रो व्याधितः शरीरग्लानिश्च ॥ णुदंत् प्रेरणे। नौर्जलतरणम् ॥ ८६८ ॥

तोः क्विक् ॥ ८६९ ॥

तुंक् वृत्त्यादौ। इत्यस्मात्क्विक् प्रत्ययो भवति। ककारः कित्कार्यार्थ इकार उच्चारणार्थः ॥ तुक् अपत्यम् ॥ ८६९ ॥

द्रागादयः ॥ ८७० ॥

द्राक् इत्यादयः शब्दाः क्विक्प्रत्ययान्ता निपात्यन्ते ॥ द्रवतेरा च द्राक् शीघ्रम् ॥ एवं सरतेः। स्राक् स एवार्थः ॥ इयर्तेरर्वादेशश्च। अर्वागचिरन्तनम् ॥ आदिग्रहणादन्येपि ॥ ८७० ॥

स्रोश्चिक् ॥ ८७१ ॥

स्रुं गतौ। इत्यस्माच्चिक् प्रत्ययो भवति ॥ स्रुग् जुह्वप्रभृत्यग्निहोत्रभाण्डम्। स्रुचौ। स्रुचः ॥ इकार उच्चारणार्थः ककारः कित्कार्यार्थः ॥ ८७१ ॥

तनेड्वच् ॥ ८७२ ॥

तनूयी विस्तारे। इत्यस्माड्डिद्वच् प्रत्ययो भवति ॥ त्वक् शरीरादिवेष्टनम् ॥ ८७२ ॥

पारेरज् ॥ ८७३ ॥

पारण् कर्मसमाप्तौ। इत्यस्मादज् प्रत्ययो भवति ॥ पारक् प्राकारः शाकविशेषः सुवर्णं रत्नं च। पारजौ। पारजः ॥ ८७३ ॥

ऋधिप्रथिभिषिभ्यः किल् ॥ ८७४ ॥

एभ्यः किदज् प्रत्ययो भवति ॥ ऋधूच् वृद्धौ। ऋधक् समीपवाच्यव्ययम् ॥ प्रथिष् प्रख्याने। निर्देशादेव स्वृत्। पृथग्नानार्थेऽव्ययम् ॥ भिषः सौत्रः। भिषग्वैद्यः। भिषजौ। भिषजः ॥ ८७४ ॥

भृपणिभ्यामिज् भुरवणौ च ॥ ८७५ ॥

भृपणिभ्यामिज् प्रत्ययो भवति यथासंख्यं च भुर वण इत्यादेशौ भवतः ॥ भृंग् भरणे । भुरिग्बाहुः शब्दो भूमिर्वायुरेकाक्षराधिकपादं चर्क्छन्दः ॥ पणि व्यवहारस्तुत्योः । वणिग्वैदेहिकः ॥ ८७५ ॥

वशेः कित् ॥ ८७६ ॥

वशक् कान्तौ । इत्यस्मात्किदिज् प्रत्ययो भवति ॥ उशिक्कान्त उशीरमग्निर्गौतमश्चर्षिः ॥ ८७६ ॥

लङ्घेरद् नलुक् च ॥ ८७७ ॥

लघुङ् गतौ । इत्यस्मादद् प्रत्ययो [ भवति ] नलोपश्चास्य भवति ॥ लघड्वायुर्लघु च शकटम् ॥ ८७७ ॥

सर्तेरड् ॥ ८७८ ॥

सृं गतौ । इत्यस्मादड् प्रत्ययो भवति ॥ सरड् वृक्षविशेषो मेघ उष्ट्रजातिश्च ॥ ८७८ ॥

ड् ह्रस्वश्च ॥ ८७९ ॥

ईडिक् स्तुतौ । इत्यस्मादविड् प्रत्ययो [ भवति ] ह्रस्वश्चास्य भवति ॥ इडविड्विभवाः ॥ ८७९ ॥

क्विपि म्लेछश्च वा ॥ ८८० ॥

म्लेछेरीडेश्च क्विपि प्रत्यये वा ह्रस्वो भवत्यत एव वचनात्क्विप् च ॥ म्लेछ अव्यक्तायां वाचि । म्लिट् । म्लेट् । उभयं म्लेच्छजातिः ॥ इड् स्वामी मेदिनी च ॥ ईड् स एव ॥ ८८० ॥

तृपेः कत् ॥ ८८१ ॥

तृपौच् प्रीतौ । इत्यस्मात्किदत् प्रत्ययो भवति ॥ तृपचन्द्रः समुद्रस्तृणभूमिश्च ॥ ८८१ ॥

संश्चद्वेहत्साक्षादादयः ॥ ८८२ ॥

एते कत्प्रत्ययान्ता निपात्यन्ते ॥ सम्पूर्वात् चिनोतेर्डित्समो मकारस्यानुस्वारपूर्वः शकारश्च । संश्चदध्वर्युः कुहकश्च । अनुस्वारं नेच्छन्त्येके । सश्चत्कुहकः ॥ विपूर्वात् हन्तेर्डिद्वश्च गुणः । विहन्ति गर्भमिति वेहद्गर्भघातिन्यप्रजा वन्ध्या च ॥ सम्पूर्वात् ईक्षतेः साक्षाभावश्च । साक्षात्समक्षमित्यर्थः ॥ आदिग्रहणात् रेहत् । वियत् । पुरीतदादयोपि ॥ ८८२ ॥

पटच्छपदादयोनुकरणाः ॥ ८८३ ॥

पटदित्यादयः कत्प्रत्ययान्ता निपात्यन्तेनुकरणशब्दाश्चेते ॥ पट गतौ। पटत् ॥ छुपंत् [सं]स्पर्शे। उकारस्याकारः। छपत् ॥ पत्लृ गतौ। पतत् ॥ शृश् हिंसायाम्। शरत् ॥ शल गतौ। शलत् ॥ खट काङ्क्षे। खटत् ॥ दहेः प च। दपत् ॥ डिपेः। डिपत् ॥ खनते रश्च। खरत् ॥ खादेः। खादत् ॥ सर्वे एते कस्यचिद्विशेषस्य श्रुतिप्रत्यासत्त्यानुकरणशब्दाः। अनुकरणमपि हि साध्वेव कर्तव्यं न यत्किंचिद्यथानक्षरमिति शिष्टाः स्मरन्ति ॥ ८८३ ॥

द्रुहिवृहिमहिपृषिभ्यः कतृः ॥ ८८४ ॥

एभ्यः किदतृः प्रत्ययो भवति ॥ द्रुहीच् जिघांसायाम्। द्रुहन्भीष्मः ॥ वृह वृद्धौ। वृहन्प्रवृद्धः। वृहती छन्दः ॥ मह पूजायाम्। महान्पूजितो विस्तीर्णश्च ॥ महान्तौ। महान्तः। महती ॥ पृषू सेचने। पृषत्तन्त्रं जलबिन्दुश्चित्रवर्णजातिर्दध्युपसिक्तमाज्यं च। पृषती मृगी। स्थूलपृषतीमालभेत ॥ ऋकारो ङ्यर्थः ॥ ८८४ ॥

गमेर्डिद्द्वे च ॥ ८८५ ॥

गम्लृं गतौ। इत्यस्मात्कतृप्रत्ययो डिद्भवति द्वे चास्य रूपे भवतः ॥ जगत्स्थावरजङ्गमो लोकः। जगती पृथिवी ॥ ८८५ ॥

भातेर्डवतुः ॥ ८८६ ॥

भांक् दीप्तौ। इत्यस्माड्डिदवतुः प्रत्ययो भवति ॥ भवान्। भवन्तौ। भवन्तः ॥ उकारो दीर्घत्वादिकार्यार्थः ॥ ८८६ ॥

हृसृरुहियुषितडिभ्य इत् ॥ ८८७ ॥

एभ्य इत् प्रत्ययो भवति ॥ हृंग् हरणे। हरिद्धरितो वर्णः ककुब् वायुर्मृगजातिरश्वः सूर्यश्च ॥ सृं गतौ। सरिन्नदी ॥ रुहं जन्मनि। रोहिद्रोहित्प्रकारो मत्स्यः सूर्योर्मिर्मृगो वर्णश्च ॥ युषः सौत्रः। योषति गच्छति पुरुषमिति योषित्स्त्री ॥ तडण् आघाते। तडिद्विद्युत् ॥ ८८७ ॥

उदकात् श्वेर्डित् ॥ ८८८ ॥

उदकपूर्वात् ट्वोश्वि गतिवृद्धयोः। इत्यस्माड्डिदित् प्रत्ययो भवति ॥ उदकेन श्वयति। उदश्वित्तक्रम् ॥ नाम्न्युत्तरपदस्य चेत्युदकस्य उदभावः ॥ ८८८ ॥

म्र उत् ॥ ८८९ ॥

मृंत् प्राणत्यागे। इत्यस्मादुत् प्रत्ययो भवति ॥ मरुद्वायुर्देवो गिरिशिखरं च ॥ ८८९ ॥

आ मादिर्वा ॥ ८९० ॥

गॄत् निगरणे । इत्यस्मादुत् प्रत्ययो भवति स च मकारादिर्वा भवति ॥ गर्मुत् इरुड आदिस्यो मधुमक्षिका तक्षा तृणं सुवर्णं च ॥ मरुद्वीजगरो मरकतमणिर्वेगस्तेजसां वर्तिश्च ॥ ८९० ॥

शक ऋत् ॥ ८९१ ॥

शकॢट् शक्तौ । इत्यस्मादृत् प्रत्ययो भवति ॥ शकृत्पुरीषम् ॥ ८९१ ॥

यजेः क च ॥ ८९२ ॥

यजीं देवपूजादौ । इत्यस्मादृत् प्रत्ययो [ भवति ] कश्चान्तादेशो भवति ॥ यकृदन्त्रम् ॥ ८९२ ॥

पातेः कृथ् ॥ ८९३ ॥

पांक् रक्षणे । इत्यस्मात्किदृथ् प्रत्ययो भवति ॥ पृथो नाम क्षत्रियाः ॥८९३॥

शॄदॄभसेरद् ॥ ८९४ ॥

एभ्योद् प्रत्ययो भवति ॥ शॄश् हिंसायाम् । शरदृतुः ॥ दॄ भये । दरज्जनपदसमानशब्दः क्षत्रिय[श्च]॥ दरदो जनपदः ॥ भस भर्त्सनदीप्त्योः सौत्रः । भसज्जघनमास्यमामाशयस्थानं च ॥ भषेरपीच्छन्त्येके । भषत् ॥ ८९४ ॥

तनित्यजियजिभ्यो डद् ॥ ८९५ ॥

एभ्यो डिदद् प्रत्ययो भवति ॥ तनूयी विस्तारे । तत् । सः ॥ त्यजं हानौ । त्यत् । त्यः । एतौ निर्देशवाचिनौ ॥ यजीं देवपूजादौ । यत् । यः । अयमुद्देशवाची ॥ ८९५ ॥

इणस्तद् ॥ ८९६ ॥

इणक् गतौ । इत्यस्मात्तद् प्रत्ययो भवति ॥ एतत् । एषः । समीपवाची शब्दः ॥ ८९६ ॥

प्रः सद् ॥ ८९७ ॥

पॄश् पालनपूरणयोः । इत्यस्मात्सद् प्रत्ययो भवति ॥ पर्षत्सभा ॥८९७॥

दॄो ह्रस्वश्च ॥ ८९८ ॥

दॄश् विदारणे । इत्यस्मात्सद् प्रत्ययो भवति ह्रस्वश्चास्य भवति ॥ दृषत्पाषाणः ॥ ८९८ ॥

युष्यसिभ्यां क्मद् ॥ ८९९ ॥

आभ्यां किन्मद् प्रत्ययो भवति ॥ युषः सौत्रः सेवायाम् । युष्मत् । यूयम् ॥ असूच् क्षेपणे । अस्मत् । वयम् ॥ ८९९ ॥

उक्षितक्ष्यक्षीशिराजिधान्विपञ्चिपूषिक्लिदिस्निहिणुमस्जेरन् ॥ ९०० ॥

एभ्योऽन्प्रत्ययो भवति ॥ उक्ष सेचने । उक्षा वृषः ॥ तक्षौ तनूकरणे । तक्षा वर्धकिः ॥ अक्षौ व्याप्तौ च । अक्षा दृष्टिनिपातः ॥ ईशिक् ऐश्वर्ये । ईशा परमात्मा ॥ राजृग् दीप्तौ । राजेश्वरः ॥ धन्विः सौत्रो गतौ । धवु गतौ वा । धन्वा मरुर्धनुश्च ॥ पचुङ् व्यक्तीकरणे । पञ्च संख्या ॥ पूष वृद्धौ । पूषादित्यः ॥ क्लिदौच् आर्द्रभावे । क्लेदा मुखप्रसेकश्चन्द्र इन्द्रश्च ॥ ष्णिहौच् प्रीतौ । स्नेहा स्वाङ्गं छदश्शा च गौः ॥ णुक् स्तुतौ । नव संख्या ॥ टुमस्जौत् शुद्धौ । मज्जा षष्ठो धातुः ॥ ९०० ॥

लूपूयुवृषिदंशिद्युदिविप्रतिदिविभ्यः कित् ॥ ९०१ ॥

एभ्यः किदन्प्रत्ययो भवति ॥ लूगश् छेदने । लुवा दात्रं स्थावरश्च ॥ पूगश् पवने । पुवा वायुः ॥ युक् मिश्रणे । युवा तरुणः ॥ वृषू सेचने । वृषेन्द्रो वृषभश्च ॥ दंशं दशने । दश संख्या ॥ द्युक् अभिगमे । द्युवाभिगमनीयो राजा सूर्यश्च ॥ दिवूच् क्रीडादौ । दिवा दिनम् । प्रतिपूर्वात् । प्रतिदिवाहोपराह्णश्च ॥ ९०१ ॥

श्वन्मातरिश्वन्मूर्धन्प्लीहन्नर्यमन्विश्वप्सन्परिज्वन्महन्नहन्मघव-न्नथर्वन्निति ॥ ९०२ ॥

एतेऽन्प्रत्ययान्ता निपात्यन्ते ॥ श्वयतेर्लुक् च । श्वा कुकुरः ॥ मातर्यन्तरिक्षे श्वयति । मातरिश्वा वायुः । अत्र तत्पुरुषे कृतीति सप्तम्या अलुप् । इकारलोपश्च पूर्ववत् ॥ मूर्छेर्धश्च मूर्छन्त्यस्मिन्नाहताः प्राणिन इति मूर्धा शिरः ॥ प्लिहो दीर्घश्च । प्लीहा जठरान्तरवयवः ॥ अरिपूर्वात् अमेर्ण्यन्तात् । अरीनामयतीत्यर्यमा सूर्यः ॥ विश्वपूर्वात् प्सातेः किच्च । विश्वप्सा कालोऽग्निर्वायुरिन्द्रश्च ॥ परिपूर्वात् ज्वलतेर्डिच्च । परिज्वा सूर्यश्चन्द्रोऽग्निर्वायुश्च ॥ महीयतेरीयलोपश्च । महा महत्त्वम् ॥ अहेर्नलोपश्चाहते । अहो दिवसः ॥ मङ्हेर्नलोपो घान्तिः । मङ्हत इति मघवेन्द्रः ॥ नञ्पूर्वात् खर्वेः खस्थश्च । न खर्वति । अथर्वाऋषिर्वेदश्च ॥ इतिकरणादन्येऽपि भवन्ति ॥ ९०२ ॥

षप्यशौभ्यां तन् ॥ ९०३ ॥

आभ्यां तन्प्रत्ययो भवति ॥ षप समवाये । अशौटि व्याप्तौ । सप्त । अष्ट । उभे संख्ये ॥ ९०३ ॥

## स्नामदिपद्यर्तिपृशकिभ्यो वन् ॥ १०४ ॥

एभ्यो वन्प्रत्ययो भवति ॥ ष्णांक् शौचे । स्नावा सिरा नदी च ॥ मदैच् हर्षे । मद्वा द्रुमः पानं कान्तिः क्रीडा मुनिः शिरश्च । मद्वरी मदिरा । बाहुल-काद्वीः । वनो रथ ॥ पदिंच् गतौ । पद्वा पन्निर्वल्मो रथः पादो गतिश्च ॥ ऋंक् गतौ । अर्वाश्वोशनिरासनं मुनिश्च ॥ पृश् पालनपूरणयोः । पर्व संधिः पूरणं पुण्यति-थिश्च ॥ शकूंट् शक्तौ । शक्वा वर्धकिः समर्थः । शक्वरी नदी विद्युच्छन्दोजा-तिर्युवतिः सुरभिश्च । शाक्वरो वृषः ॥ १०४ ॥

## ग्रहेरा च ॥ १०५ ॥

ग्रहीश् उपादाने । इत्यस्माद्वन्प्रत्ययो भवत्यकारश्चान्तादेशो भवति ॥ ग्रा-वा पाषाणः पर्वतश्च ॥ १०५ ॥

## ऋशीक्रुशिरुहिजिक्षिहसृधृदृभ्यः क्वनिप् ॥ १०६ ॥

एभ्यः क्वनिप्प्रत्ययो भवति ॥ ऋंक् गतौ । ऋत्वर्षिः ॥ शीङ्क् स्वप्ने । शीवाजगरः ॥ क्रुशं आह्वानरोदनयोः । क्रुश्वा सृगालः ॥ रुहं जन्मनि । रुह्वा वृक्षः ॥ जि अभिभवे । जित्वा धर्म इन्द्रो योद्धा [च।] जित्वरी नदी वणिजश्च । वाणारसीं जित्वरीमाहुः ॥ क्षि क्षये । क्षित्वा वायुर्विष्णुर्मृत्युश्च । क्षित्वरी रात्रिः॥ हृग् हरणे । हृत्वा रुद्रो मत्स्यो वायुश्च ॥ सृं गतौ । सृत्वा कालोऽग्निर्वायुः सर्पः प्रजापतिर्नीचजातिश्च । सृत्वरी वेदयामाता ॥ धृंङ्त् स्थाने । धृत्वा विष्णुः शैलः समुद्रश्च । धृत्वरी भूमिः॥ दृंङ्त् आदरे । दृत्वा द्रुमः॥ पकारस्तागमार्थः॥१०६॥

## सृजेः स्रज्सृकौ च ॥ १०७ ॥

सृजंत् विसर्गे । इत्यस्मात्क्वनिप्प्रत्ययो भवति स्रज् सृक् इत्येतौ चास्या-देशौ भवतः ॥ स्रज्वा मालाकारो रज्जुश्च ॥ सृक्वण्यास्योपान्तौ ॥ १०७ ॥

## ध्याप्योर्धीपी च ॥ १०८ ॥

ध्यैं चिन्तायाम् । प्यैंङ् वृद्धौ । इत्याभ्यां क्वनिप्प्रत्ययो [भवति] यथासंख्यं च धी पी इत्येतावादेशौ भवतः ॥ ध्यायतीति धीवा मनीषी निषादो व्याधिर्मत्स्य-श्च ॥ प्यायतेः । पीवा पीनः ॥ १०८ ॥

## अतेर्ध च ॥ १०९ ॥

अत सातत्यगमने । इत्यस्मात्क्वनिप्प्रत्ययो [ भवति ] धकारश्चान्तादेशो भवति ॥ अध्वा मार्गः ॥ १०९ ॥

प्रात्सदिरीरिणस्तोन्तश्च ॥ ९१० ॥

प्रपूर्वेभ्यः सद्यादिभ्यः क्वनिप्प्रत्ययो [भवति] तोन्तश्च भवति ॥ षद्लृं विशरणगत्यवसादनेषु । प्रसत्त्वा मूढो वायुश्च । प्रसत्त्वरी माता प्रतिपत्तिश्च ॥ रींश् गतिरेषणयोः । प्ररीत्वा वायुः । प्ररीत्वरी स्त्रीविशेषः ॥ ईरिक् गतिकम्पनयोः । प्रेर्त्वा सागरो वायुश्च । प्रेर्त्वरी नगरी ॥ इण्क् गतौ । प्रेत्वरी नगरीत्याहुः ॥ ९१० ॥

मन् ॥ ९११ ॥

सर्वधातुभ्यो बहुलं मन्प्रत्ययो भवति ॥ डुकृंग् करणे । कर्म व्यापारः ॥ वृग्ट् वरणे । वर्म कवचम् ॥ वृतूङ् वर्तने । वर्त्म पन्थाः ॥ चर भक्षणे च । चर्माजिनम् ॥ भस भर्त्सनदीप्त्योः सौत्रः । भसितं तदिति भस्म भूतिः ॥ जनैचि प्रादुर्भावे । जन्मोत्पत्तिः ॥ शृश् हिंसायाम् । शर्म सुखम् । वसवोऽस्य दुरितं शीर्यासुरिति वसुशर्मा । एवं हरिशर्मा ॥ मृत् प्राणत्यागे । मर्म जीवप्रदेशप्रवयस्थानं यत्र जायमाना वेदना महती जायते ॥ नृश् नये । नर्म परिहासकथा ॥ श्लिषंच् आलिङ्गने । श्लेष्मा कफः ॥ ऊष रुजायाम् । ऊष्मा तापः ॥ टुडुभृंग्क् पोषणे च । भर्म सुवर्णम् ॥ यांक् प्रापणे । यामा रथः ॥ वांक् गतिगन्धनयोः । वामा करचरणहस्त्रः ॥ पांक् रक्षणे । पामा कच्छूः ॥ वृषू सेचने । वर्ष्म शरीरम् ॥ षद्लृं विशरणगत्यवसादनेषु । सद्म गृहम् ॥ विशंत् प्रवेशने । वेश्म गृहम् ॥ हिंट् गतिवृद्ध्योः । हेम सुवर्णम् ॥ छदण् अपवारणे । छद्म माया ॥ दींच् क्षये । देंङ् पालने वा । दाम रज्जुर्माला च ॥ डुधांग्क् धारणे च । धाम स्थानं तेजश्च ॥ ष्ठां गतिनिवृत्तौ । स्थाम बलम् ॥ षुंग्ट् अभिषवे । सोम यज्ञः पयोरसश्चन्द्रश्च ॥ अशौटि व्याप्तौ । अश्मा पाषाणः ॥ लक्षीण् दर्शनाङ्कनयोः । लक्ष्म चिह्नम् ॥ अग्रि गतौ । अग्म संग्रामः ॥ तक हसने । तक्मा रतिरातपो दीपश्च ॥ हुंक् दानादनयोः । होम हव्यमग्निहोत्रशाला च ॥ धृंग् धारणे । धर्म पुण्यम् । विपूर्वात् । विधर्मा अहितो वायुर्व्यभिचारश्च ॥ ध्यैं चिन्तायाम् । ध्याम ध्यानम् ॥ ९११ ॥

कुष्युषिसृपिभ्यः कित् ॥ ९१२ ॥

एभ्यः किन्मन्प्रत्ययो भवति ॥ कुषश् निष्कर्षे । कुष्म शल्यम् ॥ उषू दाहे । उष्मा दाहः ॥ सृप्लृं गतौ । सृप्मा सर्पः शिशुर्यतिश्च ॥ ९१२ ॥

बृंहेर्नोच्च ॥ ९१३ ॥

बृहु शब्दे च । इत्यस्मान्मन्प्रत्ययो भवति नकारस्य च अकारो भवति ॥ ब्रह्म परं तेजोऽध्ययनं मोक्षो बृहत्त्वादात्मा । ब्रह्मा भगवान् ॥ ९१३ ॥

## व्येग एदोतौ च वा ॥ ११४ ॥

व्येग् संवरणे । इत्यस्मान्मन्प्रत्ययो [ भव ] त्येदोतौ चान्तादेशौ वा भवतः ॥ व्येम वस्त्रम् । व्येमा संसारः कुविन्दभाण्डं च ॥ व्योम नभः । पक्षे । व्याम न्यग्रोधाख्यं प्रमाणम् ॥ ११४ ॥

## स्यतेरी च वा ॥ ११५ ॥

षोंच् अन्तकर्मणि । इत्यस्मान्मन्प्रत्ययो[भवति]ईकारश्चान्तादेशो वा भवति ॥ सीमा आघाटः । पक्षे । साम प्रियवचनं वामदेव्यादि च ॥११५॥

## सात्मन्नात्मन्वेमन्रोमन्लोमन्क्लोमन्ललामन्नामन्पाप्मन्पक्ष्मन्यक्ष्मन्निति ॥११६॥

एते मन्प्रत्ययान्ता निपात्यन्ते ॥ स्यतेस्तोन्तश्च । सात्म अत्यन्ताभ्यस्तं प्रकृतिभूतमन्तकर्म च ॥ अतेर्दीर्घश्च । आत्मा जीवः ॥ वेग आत्वाभावश्च । वेम तन्तुवायोपकरणम् ॥ रुहेर्लुक् च । रोम तनूरुहम् । लत्वे । लोम तदेव ॥ क्लमेरोच्च । क्लोम शरीरान्तरवयवः ॥ लातेर्द्वित्वं च । ललाम भूषणादि ॥ नमेरा च । नाम संज्ञा कीर्तिश्च ॥ पातयतेः प् च । पाप्मा पापं रक्षश्च ॥ पच्चेः कः षोन्तो नलोपश्च । पक्ष्म अक्ष्यादिलोम ॥ यस्यतेर्यक्षिगो वा । यक्ष्मा रोगः ॥ इतिकरणात् तोक्मशुष्मादयो भवन्ति ॥ ११६ ॥

## हृजनिभ्यामिमन् ॥ ११७ ॥

आभ्यामिमन्प्रत्ययो भवति ॥ हृंग् हरणे । हरिमा पापविशेषो मृत्युर्वायुश्च ॥ जनैचि प्रादुर्भावे । जनिमा धर्मविशेषः संसारश्च ॥ ११७ ॥

## सृहृभृधृस्तृसुभ्य ईमन् ॥ ११८ ॥

एभ्य ईमन्प्रत्ययो भवति ॥ सृं गतौ । सरीमा कालः ॥ हृंग् हरणे । हरीमा मातरिश्वा ॥ डुडुभृंग्क् पोषणे च । भरीमा क्षमी राजा कुटुम्बं च ॥ धृंग् धारणे । धरीमा धर्मः ॥ स्तृग्श् आच्छादने । स्तरीमा प्रावारः ॥ षूत् प्रेरणे । सवीमा गर्भः प्रसूतिश्च ॥ ११८ ॥

## गमेरिन् ॥ ११९ ॥

गमूं गतौ । इत्यस्मादिन्प्रत्ययो भवति ॥ गमिष्यतीति गमी जिगमिषुः ॥ ११९ ॥

आङश्च णित् ॥ ११० ॥

आङ्पूर्वात्केवलाच्च गमेर्णिदिन्प्रत्ययो भवति ॥ आगमिष्यतीत्यागामी प्रोषितादिः ॥ गमिष्यतीति गामी प्रस्थितादिः ॥ ११० ॥

सुवः ॥ १११ ॥

षूङौच् प्राणिप्रसवे । इत्यस्माण्णिदिन्प्रत्ययो भवति ॥ आसाव्यासविष्यमाणो जनिष्यमाण इत्यर्थः ॥ १११ ॥

भुवो वा ॥ ११२ ॥

भू सत्तायाम् । इत्यस्मादिन्प्रत्ययो [भवति] स च णिद्वा भवति ॥ भविष्यतीति भावी कर्मविपाकादिः ॥ भवी भविष्यन् ॥ ११२ ॥

प्रप्रतेर्याबुधिभ्याम् ॥ ११३ ॥

प्रपूर्वात्प्रतिपूर्वाच्च यांक प्रापणे । बुधिं मनिंच् ज्ञाने । इत्यस्माच्च णिदिन्प्रत्ययो भवति ॥ प्रयास्यतीति प्रयायी ॥ प्रतियास्यतीति प्रतियायी ॥ प्रभोत्स्यत इति प्रबोधी ॥ प्रतिबोधी बालादिः ॥ ११३ ॥

प्रात्स्थः ॥ ११४ ॥

प्रपूर्वात् ष्ठां गतिनिवृत्तौ । इत्यस्माण्णिदिन्प्रत्ययो भवति ॥ प्रस्थास्यत इति प्रस्थायी गन्तुमनाः ॥ ११४ ॥

परमात्कित् ॥ ११५ ॥

परमपूर्वात्स्थितेः किदिन्प्रत्ययो भवति ॥ परमे पदे तिष्ठतीति परमेष्ठी अर्हदादिः ॥ भीरुष्ठानादित्वात् षत्वं सप्तम्या अलुप् च ॥ ११५ ॥

पथिमन्थिभ्याम् ॥ ११६ ॥

आभ्यां किदिन्प्रत्ययो भवति ॥ पथे गतौ । पन्था मार्गः । पन्थानौ । पन्थानः । पथिप्रियः ॥ मन्थश् विलोडने । मन्थाः क्षुब्धो वायुर्वज्रश्च । मन्थानौ । मन्थानः । मथिप्रियः ॥ ११६ ॥

होर्मिन् ॥ ११७ ॥

हुंक् दानादनयोः । इत्यस्मान्मिन्प्रत्ययो भवति ॥ होम्यृत्विग्घृतं च ॥ ११७ ॥

अर्तेर्भुक्षिनक् ॥ ११८ ॥

ऋंक् गतौ । इत्यस्माद्भुक्षिनक् प्रत्ययो भवति ॥ ऋभुक्षा इन्द्रः । ऋभुक्षाणौ । ऋभुक्षणः ॥ ११८ ॥

अदेस्त्रिन् ॥ ९२९ ॥

अदंक् भक्षणे । इत्यस्मात्त्रिन्प्रत्ययो भवति ॥ अत्त्रृषिः ॥ ९२९ ॥

पतेरत्रिन् ॥ ९३० ॥

पत्लृ गतौ । इत्यस्मादत्रिन्प्रत्ययो भवति ॥ पतत्री पक्षी ॥ ९३० ॥

आपः क्विप् ह्रस्वश्च ॥ ९३१ ॥

आप्लृंट् व्याप्तौ । इत्यस्मात्क्विप्प्रत्ययो [भवति] ह्रस्वश्चास्य भवति ॥ आपो-म्भः ॥ स्वभावाद्बहुत्वम् ॥ ९३१ ॥

ककुप्त्रिष्टुबनुष्टुभः ॥ ९३२ ॥

एते क्विप्प्रत्ययान्ता निपात्यन्ते ॥ कपूर्वात्स्कुभ्नातेः सलोपश्च । ककुप् कं वायुर्ब्रह्म च । स्कुभ्नन्तीति ककुभो दिशः। ककुबुष्णिक्छन्दः॥ त्र्यनुपूर्वात्स्तुभ्नातेः सः षश्च । त्रिष्टुबनुष्टुप् च छन्दः ॥ बहुवचनान्निजिविजिविषां क्विप् शित् । नेनिक् प्रजापतिः ॥ वेविक् शुचिः ॥ वेविट् चन्द्रमाः ॥ ९३२ ॥

अवेर्मः ॥ ९३३ ॥

अव रक्षणादौ । इत्यस्मान्मः प्रत्ययो भवति ॥ अवतीति । ओं ब्रह्म प्रणवश्च ॥ ९३३ ॥

सेरेतेरम् ॥ ९३४ ॥

सुपूर्वात् इणक् गतौ । इत्यस्मादम् प्रत्ययो भवति ॥ स्वयमात्मना ॥ ९३४ ॥

नशिनूभ्यां नक्तनूनौ च ॥ ९३५ ॥

नशौच् अदर्शने । णूत् स्तवने । आभ्यामम् प्रत्ययो [भवति] नक्त नून इत्यादेशौ चानयोर्भवतः ॥ नक्तं रात्रौ ॥ नूनं वितर्के ॥ ९३५ ॥

स्यतेर्णित् ॥ ९३६ ॥

षोंच् अन्तकर्मणि । इत्यस्माण्णिदम् प्रत्ययो भवति ॥ सायं दिवसावसानम् ॥ ९३६ ॥

गमिजमिक्षमिकमिशमिसमिभ्यो डित् ॥ ९३७ ॥

एभ्यो डिदम् प्रत्ययो भवति ॥ गम्लृं गतौ । गम् ॥ जमू अदने । जम् ॥ क्षमौषि सहने । क्षम् ॥ एतानि भार्यानामानि ॥ कमूङ् कान्तौ । कं पानीयम् ॥ शमूच् उपशमे । शं सुखम् ॥ षम वैक्लव्ये । सं संभवति ॥ ९३७ ॥

इणो दमक् ॥ १३८ ॥

इण्क् गतौ । इत्यस्मात्किदम् प्रत्ययो भवति ॥ इदं प्रत्यक्षनिर्देशे ॥१३८॥

कोर्डिम् ॥ १३९ ॥

कुंक् शब्दे । इत्यस्माड्डिदिम् प्रत्ययो भवति ॥ किम् । अनेनाविज्ञातं वस्तु पर्यनुयुज्यते ॥ १३९ ॥

तुषेरीम् णोन्तश्च ॥ १४० ॥

तुष तुष्टौ । इत्यस्मादीम् प्रत्ययो [भवति] णकारश्चास्यान्तो भवति ॥ तूष्णीं वाग्नियमे ॥ १४० ॥

ईङ्कमिशमिसमिभ्यो डित् ॥ १४१ ॥

एभ्यो डिदीम् प्रत्ययो भवति ॥ ईङिक् स्तुतौ । ईम् ॥ कमूङ् कान्तौ । कीम् ॥ शमून् उपशमे । शीम् ॥ षम वैक्लव्ये । सीम् । अभिनयव्याहरणान्येतानि ॥ ईम् । सीम् । अव्यक्ते ॥ कीं संशयप्रभादिषु ॥ शीममर्षपादपूरणयोः ॥ १४१ ॥

क्रमिगमिक्षमेस्तुमाच्चातः ॥ १४२ ॥

एभ्यस्तुम् प्रत्ययो [भव]त्यकारस्य च आकारो भवति ॥ क्रमू पादविक्षेपे । क्रान्तुं गमनम् ॥ गमॢं गतौ । गान्तुं पान्थः ॥ क्षमौषि सहने । क्षान्तुं भूमिः ॥ तुमर्थश्च सर्वत्र ॥ १४२ ॥

गॄपॄदुर्विधुर्विभ्यः क्विप् ॥ १४३ ॥

एभ्यः क्विप्प्रत्ययो भवति ॥ गॄश् शब्दे । गीर्वाक् ॥ पॄश् पालनपूरणयोः । पूर्नगरी ॥ दुर्वै धुर्वै हिंसायाम् । दूर्देहान्तरवयवः ॥ धूः शकटाङ्गमादिश्च ॥ १४३ ॥

वार्द्वारौ ॥ १४४ ॥

एतौ क्विप्प्रत्ययान्तौ निपात्येते ॥ वृणोतेर्वृद्धिश्च । वाः पानीयम् ॥ कर्मणि दश्च धात्वादिः । वृण्वन्ति तामिति द्वार्द्वारम् । वृं वरणे । इत्यस्य च णिगन्तस्य रूपम् ॥ १४४ ॥

प्रादतेरर् ॥ १४५ ॥

प्रपूर्वात् अत सातत्यगमने । इत्यस्मादर् प्रत्ययो भवति ॥ प्रातः प्रभातम् ॥ १४५ ॥

सोरतेर्लुक् च ॥ ९४६ ॥

सुपूर्वात् ऋंक् गतौ । इत्यस्मादर् प्रत्ययो [भवति] धातोश्च लुग्भवति ॥ स्वः स्वर्गः ॥ ९४६ ॥

पूसन्यमिभ्यः पुनसनुतान्ताश्च ॥९४७॥

पूगृश् पवने । षन भक्तौ । अम गतौ । इत्येतेभ्योर् प्रत्ययो भवति यथासंख्यं च पुन सनुत अन्त इत्यादेशा एषां भवन्ति ॥ पुनर्भूयः ॥ सनुतः कालवाची ॥ अन्तर्मध्ये ॥ ९४७ ॥

चतेरुर् ॥ ९४८ ॥

चतेग् याचने । इत्यस्मादुर् प्रत्ययो भवति ॥ चत्वारः संख्या । चत्वारि । चतुरः ॥ ९४८ ॥

दिवेर्डिव् ॥ ९४९ ॥

दिवूच् क्रीडादौ । इत्यस्माड्डिव् प्रत्ययो भवति ॥ द्यौः स्वर्गोन्तरिक्षं च । दिवौ । दिवः ॥ ९४९ ॥

विशिविपाशिभ्यां क्विप् ॥ ९५० ॥

आभ्यां क्विप्प्रत्ययो भवति ॥ विशंत् प्रवेशने । विशः प्रजाः । विड्वैश्यः पुरीषमपत्यं च ॥ पशण् बन्धने । विपूर्वः । विपाशयति स्म विशिष्टमिति विपाड् नदी ॥ ९५० ॥

सहेः षष् च ॥ ९५१ ॥

षहि मर्षणे । इत्यस्मात्क्विप्प्रत्ययो [भवति] षष् चास्यादेशो भवति ॥ षट् संख्या ॥ ९५१ ॥

अस् ॥ ९५२ ॥

सर्वधातुभ्यो बहुलमस् प्रत्ययो भवति ॥ तपं संतापे । तपः संतापो माघमासो निर्जराफलं च ॥ अनशनादि सुष्ठु तपतीति सुतपाः ॥ एवं महातपाः ॥ णमं प्रह्वत्वे । नमः पूजावाची ॥ तमूच् काङ्क्षायाम् । तमोन्धकारस्तृतीयगुणोज्ञानं च ॥ इणक् गतौ । अयः काललोहम् ॥ वींक् प्रजननादौ । वयः पक्षी प्राणिनां कालकृता शरीरावस्था च यौवनादिः ॥ वर्चि दीप्तौ । वर्चो लावण्यमन्नमलं तेजश्च । सुष्ठु वर्चत इति सुवर्चाः ॥ रक्ष पालने । रक्षो निशाचरः ॥ ञिमिदाच् स्नेहने । मेदश्चतुर्थो धातुः ॥ रह त्यागे । रहः प्रच्छन्नम् ॥ षहि मर्षणे । सहा मार्गशीर्षमासः ॥

णभच् हिंसायाम् । नभ आकाशं श्रावणमासश्च ॥ चितै संज्ञाने । चेतश्चित्तम् । प्रचेता वरुणः ॥ मनिच् ज्ञाने । मन नो [?] इन्द्रियम् ॥ वचंक् व्यक्तायां वाचि । वचो वचनम् ॥ रुदृक् अश्रुविमोचने । रोदो नभः । रोदसी द्यावापृथिव्यौ ॥ रुधूंपी आवरणे । रोधस्तीरम् ॥ अनक् प्राणने । अनः शकटं भोजनमन्नं च ॥ सृं गतौ । सरो जलाशयविशेषः ॥ तृ प्लवनतरणयोः । तरो वेगो बलं च ॥ रहु गतौ । रंहो जवः ॥ तिजि क्षमानिशानयोः । तेजो दीप्तिः ॥ मथि गतौ । मयः सुखम् ॥ मह पूजायाम् । महस्तेजः ॥ अर्चिण् पूजायाम् । अर्चः पूजा ॥ षद्लृ विशरणगत्यवसादनेषु । सदः सभा भवनं च ॥ अञ्जौप् व्यक्त्यादौ । अञ्जः स्नेहः ॥ ९५२ ॥

पाहाक्भ्यां पयह्यौ च ॥ ९५३ ॥

पां पाने । ओहांक् त्यागे । इत्येताभ्यामस् प्रत्ययो भवति यथासंख्यं च पय ह्य इत्यादेशावनयोर्भवतः ॥ पयः क्षीरं जलं च ॥ ह्योनन्तरातीते दिने ॥ ९५३ ॥

छदिवहिभ्यां छन्दोधौ च ॥ ९५४ ॥

छदण् संवरणे । वहीं प्रापणे । इत्याभ्यामस् प्रत्ययो भवति यथासंख्यं चानयोश्छन्द ऊध इत्यादेशौ भवतः ॥ छन्दो वेद इच्छा वाग्बन्धविशेषश्च ॥ ऊधो धेनोः क्षीराधारः ॥ ९५४ ॥

श्वेः शव च वा ॥ ९५५ ॥

ट्वोश्वि गतिवृद्ध्योः । इत्यस्मादस् प्रत्ययो [भव]त्यस्य च शव इत्यादेशो वा भवति ॥ शवो रोगाभिधानं मृतदेहश्च । शवसी । शवांसि ॥ श्वयः शोफो बलं च । श्वयसी । श्वयांसि ॥ ९५५ ॥

विश्वाद्विदिभुजिभ्याम् ॥ ९५६ ॥

विश्वपूर्वाभ्यामाभ्यामस् प्रत्ययो भवति ॥ विदक् ज्ञाने । विश्ववेदा अग्निः ॥ भुजंप् पालनाभ्यवहारयोः । विश्वभोजा अग्निर्लोकपालश्च ॥ ९५६ ॥

चायेर्नो ह्रस्वश्च वा ॥ ९५७ ॥

चायृग् पूजानिशामनयोः । इत्यस्मादस् प्रत्ययो भवति नकारोन्तादेशो ह्रस्वश्चास्य वा भवति ॥ चनश्चानश्चान्नम् । बाहुलकाण्णत्वम् । णत्वं नेच्छन्त्येके ॥ ९५७ ॥

अशेर्यश्चादिः ॥ ९५८ ॥

अशश् भोजने । अशौटि व्याप्तौ । इत्यस्माद्वास् प्रत्ययो [भवति] यकार-

थ धात्वादिर्भवति ॥ यशो माहात्म्यं सत्त्वं श्रीः ज्ञानं प्रतापः कीर्तिश्च ॥ एवं शोभनमभ्यात्यभुते वा । सुयशाः ॥ नागमेवाभाति । नागयशाः ॥ बृहदेनोभाति । बृहद्यशाः ॥ श्रुत एनोभाति । श्रुतयशाः ॥ एवमन्येपि द्रष्टव्याः ॥ ९५८ ॥

उषेर्ज् च ॥ ९५९ ॥

उषू दाहे । इत्यस्मादस् प्रत्ययो [ भवति ] जकारश्चान्तादेशो भवति ॥ ओजो बलं प्रभावो दीप्तिः शुक्रं च ॥ ९५९ ॥

स्कन्देर्ध च ॥ ९६० ॥

स्कन्दृं गतिशोषणयोः । इत्यस्मादस् प्रत्ययो [भवति] धकारश्चान्तादेशो भवति ॥ स्कन्धः स्वाङ्गम् ॥ ९६० ॥

अवेर्वा ॥ ९६१ ॥

अव रक्षणादौ । इत्यस्मादस् प्रत्ययो [भवति] धकारश्चान्तादेशो वा भवति ॥ अधोवरम् ॥ अवो रक्षा ॥ ९६१ ॥

अमेर्भहौ चान्तौ ॥ ९६२ ॥

अम गतौ । इत्यस्मादस् प्रत्ययो [ भवति] भकारहकारौ चान्तौ भवतः॥ अम्भः पानीयम् ॥ अंहः पापमपराधो दिनश्च ॥ ९६२ ॥

अदेरन्ध् च वा ॥ ९६३ ॥

अदंक् भक्षणे । इत्यस्मादस् प्रत्ययो [ भव ]त्यन्धादेशश्चास्य वा भवति ॥ अद्यते तदिति । अन्धोन्नम् ॥ अद्यते दृशा मनसा च तदिति । अदः । अनेन प्रत्यक्षं विप्रकृष्टमपदिश्यते ॥ ९६३ ॥

आपोपाप्नाप्सराब्जाश्च ॥ ९६४ ॥

आप्लृंट् व्याप्तौ । इत्यस्मादस् प्रत्ययो [भव]त्य[प] अप्न अप्सर अब्ज इत्यादेशाश्चास्य भवन्ति ॥ अपः सत्कर्म ॥ अप्नस्तदेव ॥ अप्सरसो देवगणिकाः ॥ अब्जो जलजमजर्यं च रूपम् ॥ ९६४ ॥

उच्यञ्चेः क च ॥ ९६५ ॥

उचच् समवाये । अञ्चू गतौ च । इत्याभ्यामस् प्रत्ययो [ भव ]त्यनयोश्च कोन्तादेशो भवति ॥ ओक आलयो वलीकसश्च ॥ अङ्कः स्वाङ्गं रणश्च ॥ ९६५ ॥

अञ्ज्यजियुजिभृजेर्ग च ॥ ९६६ ॥

एभ्योस् प्रत्ययो [भवति] गकारश्चान्तादेशो भवति।। अञ्जौप् व्यक्त्यादिषु। अङ्गः क्षत्रियनाम गिरिपक्षी व्यक्तिश्च ॥ अज क्षेपणे च। अगः क्षेमम् ॥ युजूंपी योगे। योगो मनो युगं च ॥ भृजैङ् भर्जने। भर्गो रुद्रो हविस्तेजश्च ॥ ९६६॥

अर्तेरुराशौ च ॥ ९६७ ॥

ऋंक् गतौ। इत्यस्मादस् प्रत्ययो [ भव ]त्यस्य च उर इति अर्श इति च। तालव्यशकारान्त आदेशो भवति।। उरो वक्षः ॥ अर्शांसि गुह्यादिकीलाः ॥९६७॥

येन्धिभ्यां यादेधौ च ॥ ९६८ ॥

यांक् प्रापणे। ञिइन्धैपि दीप्तौ। इत्याभ्यामस् प्रत्ययो [भवति] यथासंख्यं च याद् एध् इत्यादेशौ भवतः ॥ यादो जलदुष्टसत्त्वम् ॥ एध इन्धनम् ॥९६८॥

चक्षः शिद्वा ॥ ९६९ ॥

चक्षिक् व्यक्तायां वाचि। इत्यस्मादस् प्रत्ययो भवति स च शिद्वा [भवति ॥] चक्षः। ख्याः। उभे अपि रक्षोनामनी ॥ आचक्षा वाग्मी ॥ आख्याः प्रख्याश्च बृहस्पतिः ॥ संचक्षा ऋत्विक् ॥ नृचक्षा राक्षसः ॥ ९६९ ॥

वस्त्यगिभ्यां णित् ॥ ९७० ॥

आभ्यां णिदस् प्रत्ययो भवति ॥ वसिक् आच्छादने। वासो वस्त्रम् ॥ अग कुटिलायां गतौ। आगोपराधः ॥ ९७० ॥

मिथिरञ्ज्युषितॄपॄशॄभूवष्टिभ्यः कित् ॥ ९७१ ॥

एभ्यः किदस् प्रत्ययो भवति ॥ मिथृग् मेधाहिंसयोः। मिथः परस्परं रहसि चेत्यर्थः ॥ रञ्जीं रागे। रजो गुणोशुभं पांशुश्च ॥ उषू दाहे। उषाः संध्यारुणो रात्रिश्च ॥ तॄ प्लवनतरणयोः। तिरस्करोति। तिरः कृत्वा काण्डं गतः। तिर इत्यन्तर्धावनृजुत्वे च ॥ पॄश् पालनपूरणयोः। पुरः पूजायाम्। तथा च पठन्ति नमः पुरायाम्। पुरश्चेति ॥ शॄश् हिंसायाम्। शृणाति तद्वियुक्तमिति शिर उत्तमाङ्गम् ॥ भू सत्तायाम्। भुवो लोकोन्तरिक्षं सूर्यश्च ॥ वशक् कान्तौ। उशा रात्रिः ॥ ९७१ ॥

विधेर्वा ॥ ९७२ ॥

विधत् विधाने। इत्यास्मादस् प्रत्ययो भवति स च किद्वा [ भवति ॥] वेधा विद्वान्सर्वविल्प्रजापतिश्च ॥ विधाः स एव ॥ ९७२ ॥

नुवो धथादिः ॥ ९७३ ॥

णूत् स्तवने इत्यस्माद्धकारादिस्थकारादिश्च किदस् प्रत्ययो भवति ॥ नूधा नूथाश्च सूतमागधौ ॥ धादौ गुणमिच्छन्त्येके । नोधा ऋषिर्ऋत्विक् ॥ ९७३ ॥

वयःपयःपुरोरेतोभ्यो धागः ॥ ९९४ ॥

एभ्यः परात् डुधांग्क् धारणे च । इत्यस्मात्किदस् प्रत्ययो भवति ॥ वयोधा युवा चन्द्रः प्राणी च ॥ पयोधाः पर्जन्यः ॥ पुरोधाः पुरोहित उपाध्यायश्च ॥ रेतोधा जनकः ॥ ९७४ ॥

नञ ईहेरेहेधौ च ॥ ९७५ ॥

नञ्पूर्वात् ईहि चेष्टायाम् । इत्यस्मादस् प्रत्ययो [ भव ] त्यस्य च एह एध इत्यादेशौ भवतः ॥ अनेहाः काल इन्द्रश्चन्द्रश्च ॥ अनेधा अग्निर्वायुश्च ॥९७५ ॥

विहायस्सुमनस्पुरुदंशस्पुरूरवोङ्गिरसः ॥ ९७६ ॥

एतेसप्रत्ययान्ता निपात्यन्ते ॥ विपूर्वाज्जहातेर्जिहीतेर्वा योन्तश्च । विजहातीति विहाय आकाशम् । विजिहीत इति विहायाः पक्षी ॥ सुपूर्वान्मानेर्ह्रस्वश्च सुष्ठु मानयन्ति मन्यन्ते वा । सुमनसः पुष्पाणि ॥ पुरु दशतीति पुरुदंशा इन्द्रः ॥ पुरुपूर्वाद्रौतेर्दीर्घश्च पुरु रौति । पुरूरवा राजा यमुर्वशी चकमे ॥ अङ्गेरिरोन्तश्च । अङ्गतीति । अङ्गिरा ऋषिः ॥ ९७६ ॥

पातेर्जस्थसौ ॥ ९७७ ॥

पांक् रक्षणे । इत्यस्माज्जस् थस् इत्येतौ प्रत्ययौ भवतः ॥ पाजो बलम् ॥ पाथ उदकमन्नं च ॥ ९७७ ॥

स्रुरीभ्यां नस् ॥ ९७८ ॥

आभ्यां नस् प्रत्ययो भवति ॥ स्रुं गतौ । स्रोतो निर्झरणम् । सुष्ठु स्रवतीति सुस्रोताः ॥ रीश् गतिरेषणयोः । रेतः शुक्रम् ॥ ९७८ ॥

अर्तीण्भ्यां नस् ॥ ९७९ ॥

आभ्यां नस् प्रत्ययो भवति ॥ ऋंक् गतौ । अर्णो जलम् ॥ इणुक् गतौ । एनः पापमपराधश्च ॥ ९७९ ॥

रिचेः क् च ॥ ९८० ॥

रिचूंपी विरेचने । इत्यस्मादस् प्रत्ययो [भव] त्यस्य च ककारान्तादेशो भवति ॥ रेक्णो धनं पापं च ॥ ९८० ॥

रीवृभ्यां पस् ॥ ९८१ ॥

आभ्यां पस् प्रत्ययो भवति ॥ रींश् गतिरेषणयोः । रेपः पापम् ॥ वृगूङ् वरणे । वर्पो रूपम् ॥ ९८१ ॥

शीङः फश्च ॥ ९८२ ॥

शीङ्क् स्वप्ने । इत्यस्मात्फस् चकारात्पस् च प्रत्ययो भवति ॥ शेफः शेपश्च मेण्ढ्रम् ॥ ९८२ ॥

पचिवचिभ्यां सस् ॥ ९८३ ॥

आभ्यां सस् प्रत्ययो भवति ॥ डुपचींष् पाके । पक्षश्चक्रमिन्धनं च ॥ वचंक् भाषणे । वक्ष उरः शरीरं च ॥ ९८३ ॥

इणस्तशस् ॥ ९८४ ॥

इण्क् गतौ । इत्यस्मात्तशस् प्रत्ययो भवति ॥ एतशः सोमोऽश्वर्युर्वायुरग्निरर्क इन्द्रश्च ॥ ९८४ ॥

वष्टेः कनस् ॥ ९८५ ॥

वशक् कान्तौ । इत्यस्मात्किदनस् प्रत्ययो भवति॥उशनाः शुक्रः॥९८५॥

चन्दी रमस् ॥ ९८६ ॥

चदु दीप्त्याह्लादयोः । इत्यस्माद्रमस् प्रत्ययो भवति ॥ चन्द्रमाः शशी ॥९८६॥

दमेरुनसूनसौ ॥ ९८७ ॥

दमूच् उपशमे । इत्यस्मादुनस् ऊनस् इत्येतौ प्रत्ययौ भवतः ॥ दमुना अग्निः ॥ दमूनाः सूर्यो देव उपशान्तश्च ॥ ९८७ ॥

इण आस् ॥ ९८८ ॥

इण्क् गतौ । इत्यस्मादास् प्रत्ययो भवति ॥ अयाः काल आदित्यश्च ॥ ९८८ ॥

रुच्यर्चिशुचिहुसृपिछादिछर्दिभ्य इस् ॥९८९॥

एभ्य इस् प्रत्ययो भवति ॥ रुचि अभिप्रीत्यां च । रोचिः किरणः । वसुपूर्वात् । वसुरोचिर्वासवः किरण ऋतुश्च ॥ अर्चं पूजायाम् । अर्चिर्ज्वाला ॥ शुच शोके । शोची रश्मिः शोकः पिङ्गलभावो विविक्तं च ॥ हुंक् दानादनयोः ॥ हविः पुरोडाशादिः ॥ सृप्लृ गतौ । सर्पिर्घृतम् ॥ छदण् संवरणे । छादयतीति

चकादिः । कदेरिस् मन् बट् कादिति ह्रस्वः । बाहुलकाद्दीर्घत्वे । कादिः । उभयं गृहाच्छादनम् ॥ ऋहृद्रूपी दीप्तिदेवनयोः । छर्दिर्वमनम् ॥ ९८९ ॥

बंहिबृंहेर्नलुक् च ॥ ९९० ॥

आभ्यामिस् प्रत्ययो भवति नकारस्य च लुग्भवति ॥ बहुङ् वृद्धौ । बहिरनभ्यन्तरे ॥ बृहु शब्दे च । बर्हिः शिखी दर्भश्च ॥ ९९० ॥

द्युतेरादेश्च जः ॥ ९९१ ॥

द्युति दीप्तौ । इत्यस्मादिस् प्रत्ययो [ भवति ] धात्वादेश्च वर्णस्य जकारो भवति ॥ ज्योतिस्तेजः सूर्योमिस्तारका च ॥ ९९१ ॥

सहेर्ध च ॥ ९९२ ॥

षहि मर्षणे । इत्यस्मादिस् प्रत्ययो [भवति] धकारश्चान्तादेशो भवति ॥ सधिः सत्त्वं भूमिः संयोगः सहिष्णुरग्निरनड्वांश्च ॥ ९९२ ॥

पस्थोन्तश्च ॥ ९९३ ॥

पां पाने । इत्यस्मादिस् प्रत्ययो भवति थकारश्चान्तो भवति ॥ पाथिः पानं चक्षादित्यो ज्योतिः स्वर्गलोकश्च ॥ ९९३ ॥

नियो डित् ॥ ९९४ ॥

णींग् प्रापणे । इत्यस्माड्डिदिस् प्रत्ययो भवति ॥ निश्चिनोति । निरुपसर्गोयं पृथग्भावे ॥ ९९४ ॥

अवेर्णित् ॥ ९९५ ॥

अव रक्षणादौ । इत्यस्माण्णिदिस् प्रत्ययो भवति ॥ आविः प्राकाश्ये । आविरभूत् । आविष्करोति ॥ ९९५ ॥

तुभूस्तुभ्यः कित् ॥ ९९६ ॥

एभ्यः किदिस् प्रत्ययो भवति ॥ तुंक् वृत्त्यादौ । तुविः समुद्रः सरिद्वि-वस्वान्मभुसंयोगश्च ॥ भू सत्तायाम् । भुविः क्रतुः समुद्रः सरिद्विवस्वांश्च ॥ ष्टुंग्क् स्तुतौ । स्तुविः स्तोता यज्ञश्च ॥ ९९६ ॥

रुद्यर्तिजनितनिधनिमनिग्रन्थिपूतपित्रपित्रपियजिमादिवेपिभ्य उस् ॥ ९९७ ॥

एभ्य उस् प्रत्ययो भवति ॥ रुदृक् अश्रुविमोचने । रोदुरश्रुनिपातः ॥ ऋक् गतौ । अरुर्मर्म आदित्यः प्राणः समुद्रश्च ॥ जनैचि प्रादुर्भावे । जनुरुत्पत्त्यं

पिता माता जन्म प्राणी च ॥ तनूयी विस्तारे । तनुः शरीरम् ॥ धन धान्ये जौवः। धनुश्चापम् ॥ मनिच् ज्ञाने । मनुः प्रजापतिः ॥ मन्थश् संदर्भे । मन्थुर्मन्थः ॥ पृश् पालनपूरणयोः । परुः पर्व समुद्रो धर्मश्च ॥ तपं संतापे । तपुस्त्रपुः शत्रुर्भास्करोमिः कृष्णादि च ॥ त्रपौषि लज्जायाम् । त्रपुस्त्रपु ॥ डुवपीं बीजसंताने । वपुः शरीरं लावण्यं तेजश्च ॥ यजीं देवपूजासंगतिकरणदानेषु । यजुश्छन्दः भुतिर्यज्ञोत्सवश्च ॥ अदंक् भक्षणे । प्रपूर्वः । प्रादुः प्राकाश्य उत्पत्तौ च । प्रादुर्बभूव। प्रादुरासीत् ॥ टुवेपृङ् चलने । वेपुर्वेपथुः ॥ ९९७ ॥

इणो णित् ॥ ९९८ ॥

इण्क् गतौ । इत्यस्माण्णिदुस् प्रत्ययो भवति ॥आयुर्जीवितम्। जटापूर्वादपि। जटायुररुणात्मजः ॥ तं नीलजीमूतनिकाशवर्णम्, स पाण्डुरोरस्कमुदारधैर्यम् । ददर्श लङ्काधिपतिः पृथिव्याम्, जटायुषं शान्तमिवाग्निदाहम् ॥१॥ ९९८ ॥

दुषेर्डित् ॥ ९९९ ॥

दुषंच् वैकृत्ये । इत्यस्माड्डिदुस् प्रत्ययो भवति ॥ दुर्निन्दायाम् । दुष्पुरुषः ॥ ९९९ ॥

मुहिमिथ्यादेः कित् ॥ १००० ॥

आभ्यां किदुस् प्रत्ययो भवति ॥ मुहौच् वैचित्ये । मुहुः कालावृत्तिः ॥ मिथृग् मेधाहिंसयोः ॥ मिथुःसंगमः ॥ आदिग्रहणादन्येभ्योपि भवति ॥१०००॥

चक्षेः शिद्वा ॥ १००१ ॥

चक्षिक् व्यक्तायां वाचि । इत्यस्मात्किदुस् प्रत्ययो [भवति] स च शिद्वा भवति ॥ चक्षुः । परिचक्षुः । अवचक्षुः । अवसंचक्षुः । अवख्युः ॥ बाहुलकाद्द्विर्वचने । संचचक्षुः । विचख्युः ॥ १००१ ॥

पातेर्डुम्सुः ॥ १००२ ॥

पांक् रक्षणे । इत्यस्माड्डुम्सुः प्रत्ययो भवति ॥ पुमान्पुरुषः । पुमांसौ । पुमांसः ॥ उकार उदित्कार्यार्थः ॥१००२॥

न्युद्भ्यामञ्चेः ककाकैसष्टावच ॥ १००३ ॥

न्युद्भ्यां परात् अञ्चू गतौ च । इत्यस्मात्किद आ ऐस् इत्येते प्रत्यया भवन्ति ते च टावत् । टायामिव तेषु कार्यं भवतीत्यर्थः । तेन अच प्राग्दीर्घश्चेति

भवति ॥ नीचम् । उच्चम् । नीचा । उच्चा । नीचैः । उच्चैः । प्रसिद्धार्था एते । लाघवार्थं सप्ताधिकारेप्यकार-आकारप्रत्ययविधानम् ॥ १००३ ॥

शमो नियो डैस् मलुक् च ॥ १००४ ॥

शम्पूर्वात् णींग् प्रापणे । इत्यस्माड्डिदैस् प्रत्ययो [भवति] शमो मकारस्य च लुग्भवति ॥ शनैर्मन्दम् ॥ १००४ ॥

यमिदमिभ्यां डोस् ॥ १००५ ॥

आभ्यां डिदोस् प्रत्ययो भवति ॥ यमूं उपरमे । योर्विषयसुखम् ॥ दमून् उपशमे । दोर्बाहुः ॥ १००५ ॥

अनसो वहेः क्विप् सश्च डः ॥ १००६ ॥

अनस्शब्दपूर्वात् वहीं प्रापणे । इत्यस्मात्क्विप्प्रत्ययो [भवति] सकारस्य च डो भवति ॥ अनो वहति । अनड्वान्वृषभः ॥ १००६ ॥

---

# NOTES.

**1.** Verse om. V । -निवेदिता- B । संज्ञायां विषये BV । अगानं भगश्च V । साध्नोति साधुः T । -लोकपदं T -फलं सभयतीति वा B -फलं वा साधयति V । भाक्तः धर्मशीलः V । दीयेते वा तदिति B । अस्थिसंनहनं T । जानातीस्या- T । न अन- =Ś. IV, 3. P. VI, 4, 92.[1] । जलमलं च T । संपदा- = Ś. V, 1. P. III, 4, 73—75. ।

**2.** यथायोगं V । वरः om. B । शरः शयः B ।

**3.** म्लेछीडेह्न- T V म्लेछीडोर्हे- B । म्लिच्छः मूलः T V । कुनृशातिः V । -शर्वी भूर्वी V ।

**4.** नशूकमि- T । -शमि- om. B । नशः परेभ्य B । क्षयः for यक्षः V । क्षमस्तीति नक्ष T । इत्यपि om. B । V adds न आकाम्यते मुक्तिसौख्यार्थिभिः before कमूड् । नाकमस्तीति V । नखादि- =Ś. III, 2. P. VI, 3, 75 ।

**5.** B adds सुरत् ऐश्वर्यदीप्त्योः । तुदादिर्न धातुषु [ग] णः । किं तर्हि । भिन्न इति तेन बुधादीनां लिङ्गपरिग[ग्र]हस्तु ज्ञेयः after बुधः । गृह्णतीति B ।

**6.** T adds अस्य च धातोर्द्वे रूपे भवतः before तत्सं- । बुजातिश्च V ।

**7.** कृगौ B । तस्य च B ।

**8.** किंदिति विकृतम् om. B । कनूकनः B कंकनः T कंकनः V । कांतिः V । अव्यक्तं वदति om. B । गद्यते वाऽव्यक्तं B । V adds समानरूपे द्वे उक्ती भवतः before सरूपग्रहणम् । व्यञ्जन- =Ś. IV, 1. P. VII, 4, 60 ।

**9.** ददरी T । बृश् B बृश् T बृश V । बर्बरः B । बर्बरी B कर्करी V । बृश् भर्जने T । जूष् झृषष् जरसि T । श्री for स्त्री T । झृषष् जरसि om. T । मर्मरा इति बहुलाधिकारात् टित्वे न ङीः V । तत एव कंदतादपि V ।

**10.** मूर्धतेनेन मुर्मुरः T । जलाघातेन V । पूर्पुरः T । फस्तः for फेनः B ।

**11.** निप च C T । बुजातिः V ।

**12.** चम्मनी B चमू मनी V । चंक्रमः B T V ।

**13.** जम C जमु वा T । जंगमः B T V । गंगमः B T V ।

**16.** हृल- V । पूर्वस्य चाकारो अंतो भ- T । सरासरः मृगः B सारङ्गः om. T ।

**17.** सरूपे- -भवतः and यथा om. T । -कारौ चाते B T । हिलत् हावकरणे om. T । शिलत्॰ शिलिशिलः V । वेष्टने B । ऐश्वर्ये B । -संवरणयोः B । -शब्दा एव V ।

**18.** पूर्वस्य अभावः T । पूर्वस्य तिभावे T ।

**19.** The root before केलिकिलः is missing in my MSS. । हिलत् हावकरणे om. T । हैलिहिलः B V । शैलिशिलः T । शौभुशुभः om. T । अनुनादविशेषा T V ।

**20.** विवर्धौ । व्योम स्वर्गश्च T । वान्तीत्यादि from Ujjvaladatta, Uṇādis. II, 22. । प्रामि- -क्रन्दामिति om. B । -क्रंदानित्यर्थौ भवति V । महीपाल इत्यादि from Mahābhāshya, Vol. III. p. 288 (Kielhorn) ।

**21.** -मृजि- om. B । -धाराका- C । -हानशुभ्यः V । -द्वितीय एकः B V । प्रधानं स- T । पल om. B । गतौ शालि चलने वा V । चजः- = Ś. II, 1. P. VII, 3, 52, sqq. । कुटजातिश्च B ज्ञाटजातिश्च T द्रुमजातिश्च V । कनः कुंकु V । वृद्धिर्हिंसा- B । स्तोकं दारुः V । तांकरणे वा om. T । अलुरोहिश्च V । ज्ञावति अ- B ।

**22.** किष्कः T । पुष्कः चंद्रः V । चौरमोसका- दौ V । कुंदकः V । शालविः for आयुधविशेषः V । मृगवि॰ सूर्यः भू- V । -आनि- । धूधुमः T । लुकः कल्पः V । धूगद् कंपने । T । पजनने B । बौकः व्याधिनाशः V । -जातिश्च मैत्रमर्लं ॥ T ।

**24.** पित । शार्दी- C -शोदी- T V । अक्षशयश्च V । किसारुः B किसारः T ।

**25.** रेफस्य ल- T ।

**26.** वृक्षचक्रे- B । अरचांतः V । उन्मत्तश्च ॥ मदा- T उन्मत्तश्चादौ V । शालेहरां- V । उलिः सौवः V । आदे ढकारस्याकादयेपि निपातनमेवैषां V ।-सकादयोपि B ।

**27.** कमंडलश्च B । वर्षापाषाणः B । कांस्यभा- T कंशभा- V । अविध्वंसने B । वाजसनेयवि॰श्च V । पानपात्रं V । फल गतौ B । अचकः B । चीरकफलः T । चारकः V । कौरकः V । पारश्च for दीपाधारश्च V ।

[1] Ś. = —Hemachandra's Śabdānuśāsana. P. = Pāṇini.

**28.** कुरुवकः B कुरुवकः T कुरवकः V। द्रुः for वृक्षः V। रण्टिः प्राणहरणे V।

**29.** प्रधानं। धुवका की आव- B। वा om. T। क्षिपंतु T। शस्त्रं for आयुधं V। द्रुस्वीभावे om. T।

**32.** नखादि- =Ś. III, 2. P. VI, 3, 75.।

**33.** -मेनक- om. V। -मेचकगुनकमेनका- मे- B। -धनक- C। -क्षुल्लक- C। -वटकवका- T V p.m.। एते om. T। अकः प्रत्ययो भवति ता निपा- T। वर्णवि॰ V। अस्य च धमः V। को धांतः B। वधनं च B। रूपे om. B। एरिका B। अश्मको B। रमेलैश्च V। B om. the second क्षुद्र, V has स instead। अस्य वोऽन्तश्च T। कालामापिबतीति V। तोटकोख्यायका- T। -दयोपीति V। After this Sūtra a lacuna begins in C, extending till Sūtra 47.।

**34.** -वलि- T V। -कुटु- B। फल om. B। पूरणा T। युतौ- B। वलाका V। तम- काकश्च T V। तडागं T। मल्लाक औ-B। दवाकः म्लेच्छजातिः V, — जाति is cancelled in B। नभः for आकाशं V।

**35.** गुहाका V, no synonyme given in my MSS.। -स्विश्वविधाविशेषः T। पूग om. V।

**36.** पिनपिण्यौ T। पिन पिण्य T।

**37.** मव मव बंधने T। मोऽन्तश्च V। ज्युवते T ज्यर्थ्यते V। स्वदसष- T।

**38.** कूकल्य- T। -स्फुटि-V। स्फुटिकं B। B adds दूषयतीति before दूषिका। नेत्रमलं V।

**39.** आङः प-B। विवहारज्ञो B व्यवहारको T।

**41.** -वृश्चिभ्यः B T। एभ्यः किदितः प्र-T। स च कित् om. ।-T न्नादनकरूपः T।

**42.** एभ्य इकः B। पाथः for पथिकः V। B adds वणिग् before गन्धविक्रयी।

**44.** सिम इति ह्रस्वो- T।

**45.** कुशेः V। श च BV शच् T। आदेः गाब्दिकगुरिकः V। गब्दिकगुरिकगुलिका- T गंदि- कगुरिक- B।

**46.** आप for स्यमीका V। वीरणतृणजातिः V। तला च V। वली for बलवान् V। पुण्यश्री V। मिश्रं V। च om. V।

**47.** गु द्रे द्रु- C, before that stands भवति, which is the first word on f. 149, a. The preceding folio ends with -वटव- काव of Sūtra 33। जलाश्रयः B। कुरर: T V। भक्ष्यार्थेः V। विकलेन्द्रियः om. V। बालकश्च V। डरणः B। -संजातश्च B। शूरः T।

**48.** -वृश्चिलिलि- V। वज्रबलस्था- B। दुर्वाकिः मनोज्ञः B। शालोकं शस्य" च B।

**50.** शृणीका- C। -ककणीककाङ्गिणीक- C -किकणीकाहिंकिणीक- V। प्रांकू पूरणे om. T। संपतांति B। -मैलेऽन्तश्च V। ज्वालः T। तिमरितङ् V। तितडीक इति B तितिडीक T। चंकण्यतेः B चंकण्यते T चंकर्ण्यतेः V। कण्कणच् V। किम् प- T। कणतेः B। किंकणिका B। गुणेडर V। चंचेरर V। मादलिका च V। तृतीयत्वाभावः B। -ईकः B। देई T।

**51.** मिग्मीग- =Ś. IV, 2. P. VI, 1, 50.। वमूकः V न कुहकः V।

**52.** समुभिभ्यां पर- T। परापवादी V।

**53.** कृमं वा C। कृम इत्या-T। बंधनः T। पूगद्रुः V।

**54.** कीडनं T। द्रुमः for वृक्षः V।

**55.** मद्द B। मद्द चा- B।

**56.** हिंस्रकश्च V।

**57.** -नशुक- om. C। -हिशुकचिबुक- till -पृथूक- of Sūtra 61 is missing in C.। प- वाससीलः T। चन्द्रः om. T। वीतश्च TV। चुलुम्पः उच्छेदे V। अन्त्य--पक्ष stands in the margin T, om. B। -भुष च V। -हल्म च V। B adds स्थूल च before पृथुकः। मथुकः T। शिखाग्रीवादिभूषश्च B। ग्रीवादिभ्योषश्च V। वालुंकी- B T।

**58.** -जलिवलि-T। निदर्शनेभः B मृगानिर्देशने- भः V। वलूकः T। त्वक्क्रिमिः B। सरोजपक्षी V। दर्दरः B दुर्दुरः V।

**59.** शालूकः T।

**60.** अक्षिमलः T।

**61.** On the lacuna in C see Sūtra 57.। -कौरुभूक- C-कौरुवूक-T। चामेर्वोऽन्तो T V। शंबूकः सांबूकः द्वावपि शंखौ V। पृथुकं मा- नुवाहनं V। वृक्षः om. T। उरु वाति T om. B। करूबूकः T। वरूकं V। वावदूकानुका- T।

**63.** रेकः रोरः V रंकः। लांकु T। पूः for पुरी V।

**64.** -मिचकूक C। विटकः B। विटंक B V।

**65.** -रविकः T, text and comm.। कल- विकः T।

**67.** जीविरातृको जैव वा C। जैव च T। मेघः T।

**70.** -दशांश V। पिधानं च हैमादिषु B। शिमाणक B। नासिकामलः T नासामलः V।

**71.** धानकः B । श्लेष्मायुः । आयुः पु- T ।
**73.** कर्नीनिकः कनीनिका T । कनीनिका B ।
**74.** एधुकर्दधुकौ B । -धुकौ वा T । गुवेधु-का V ।
**76.** कृषिपूति- V । भं for नक्षत्रं V । शरावती नदी च B । -र्ण्णं नदीविशेषश्च V ।
**77.** इष्यसि-T । -दैवत्यं ॥ T V । मस्तकः T । कं for शिरः V ।
**78.** द्वे रूपे ॥ T ।
**79.** द्रुविशेषः V । करहाटकः B ।
**81.** बलिविलि- B विलिविलि- C बलिविलि- T बलिवलि- V । विलत् T V । विलाहकः T V ।
**82.** -दिण्यासः V ।
**83.** कफेनलुः B ककफेलुः V ।
**84.** समिम-V । चित्रपत्रश्च V । -पटः संख्या मंगलं च B ।
**85.** इयतिरिच C शतैरिच T । बालः for बाणः V ।
**86.** पुमुहोः पुन्पुरौ ॥ B । च om. B । वूमूहोः पूत्पूरौ च C । पुन्पुरित्या- B । बाणः वृष. V ।
**87.** खमरित नखः T V । खानींद्रियाणि सुखं T ।
**88.** चांतस्य B । ऊर्ध्वे V ।
**89.** प्रत्ययः कित् अंत- B किदंत- T, but किद् has been cancelled ।
**92.** -गृभ B-गृभ-V । -स्तृ - B V । देवी B स्वर्नदी V । अग्निः for वह्निः B । अदं प्साक्रु B । वस्तः B T । गर्गश्च V ।
**93.** संघः for संघातः T ।
**94.** T adds पक्षी before उपपतिः ।
**95.** द्रागं V । T adds in the margin द्रम्यतेऽस्यां व्यवहारिभि शुल्कपातनार्थं before द्रङ्गा ।
**96.** T adds च above the line after तस्यैव । आदिशब्दात् T आदे V ।
**98.** पिति- V । -कृ- V । -त्वा- om. C । T adds शबलः before शलभः । सुगंधितु. V । अन्येपि B ।
**99.** वर्णाविº for शबलवर्णश्च V । काणखं-जयोः B । द्रुमातिः V ।
**100.** च om. C ।
**101.** विडिपक्षि- T । बिलत् वरणे B । विलत् भे- T । कुरुजः V ।
**102.** स्फालि- B । -कणाः B । कलिङ्गा om. V । जनपदश्च V । लिंगः B । पुंस्त्रीत्वादिः T s. m. ।
**103.** चांतः B चाताः V । पक्षी ॥ B T V । साल्वा- B T V ।
**105.** -चलेरादेरित्वं B ।
**106.** -हङ्गकः C । B gives first मातुलिङ्गः । मातुलुंगः मातुलिंगश्च बीजपूरः V ।
**107.** डिंडुंगकु म- B । कमूह् काम्बौ om. T । कन्वल्यः नवांकुराः V । T gives शुङ्गा विनता before शुङ्गाः क- ।
**108.** -तुङ्गकु म- B । मुरंगा B T सुरंगः V ।
**109.** -र्यो मा C । मानः V । -प्रमाणं च B । ऊरु for शारीरावयवः V ।
**110.** -मृघ- B -र्घ- T -नैघ- V । भं for नक्षत्रं V । हंतिर्हस्य B । घस्मरः आपि V । अमर्मलुक् B ।
**111.** सरघाः मधुमक्षिकाः T ।
**112.** इणश्च चट् B । B adds सम्पूº before समीच । भूः for पृथिवी V ।
**113.** चरतेर्वा चूरा- B ।
**114.** पक्षी for शकुनिः V । कवचः B । द्रुमातिः V । धान्यव- V ।
**119.** अंतस्य च B । द्रुजातिः V ।
**120.** कुटादि- B T । -दित्वाद्वित्वं B T V. See Sūtra 112. ।
**121.** -स्मादृचट् B । मुचिश्च T ।
**122.** चीचः द्रुविº V । ना for पुरुषः V ।
**123.** क्षुद्रः क- V । कुलेः om. B ।
**124.** -पज्य C । -कसिभ्य- B । -उङ्गः C । प्रमत्तः ना च V । अदं प्साक् भ- B । कुङ्कुः V । वकुटारश्च B । कच्छः for कच्छा B ।
**125.** पीपुडौ V । पिच्छल V । पुच्छः V ।
**126.** -कैधिच्छा- B -ङ्कैधिच्छा- C । पिलिपिच्छः B । आदेः पिछा- V । -दयो भ- T ।
**128.** पुक om. C । पुन इत्या- T ।
**129.** कुव कुबू T । कुब् om. C । कुवकुनौ V । कुव् कुन् इ- T ।
**130.** कुटादित्वाद्वित्वं B T om. V. See Sūtras 112; 120 । कुटजौ om. B T V ।
**131.** भिषु भिष्णु इ- T ।
**132.** मुरु इ-T । मुरंजः B ।
**133.** बलोर्गौतश्च B वले- C । बाल B V । वल्वजः V । बलजः B ।
**136.** कृणोऽजकः V । द्रुमातिः V ।
**137.** ससीकनिरौ T ।
**139.** -केशसंघः V । V adds वन भक्तौ before सटा । अपथितकेशसंघः V. B has the Visarga above the line.

**140.** यक्षवि– B पक्षिविशेषावितौ T द्रुवि°V।

**142.** –कर्म्वि– T–कर्वि– B C V। –क्वलि–T V। कर्व गतौ om. T। कर्वंद B T। शकटः V। गत्यर्थौ सौत्रौ V। कुशीरश्च T क्षुद्रजंतुश्च for कुलीरश्च V। कृकलाशः B कृपलासः V।

**143.** –बिलि– B –वलि– T V। कुलटः B कुटला V। बिलटा B।

**144.** कपटकीकटादयः श– B। कंपतेनै–T। कपटः V।

**145.** आयुक्तः B। ललाटः भालं V।

**146.** पुरोगः V। अल्पं V। उपानं V।

**147.** लश्चांतस्य B।

**148.** –प्रपुत्राटादयः T V। जपा– = Ś. II, 3.। गडगजः B।

**149.** भ च T V भवति C। चर इति सौ– B। चिर्भटी B V।

**150.** डिंटश्च B। –खिर T V –खर C। खिरंडि– B T।

**151.** तिरटी V। प्रकुटं B। कंप्यः B।

**153.** वृषन्दृभ्य C। एभ्य डट डश्च om. T। –भक्तिभिर्वि– B; see Sūtra 177.। विडालः V। मेघः B। मेघः B। V gives the note मिश्र– at the end of the commentary.

**155.** मर्कुटककुटोकुरु– C। कचवरपुंजः B V। स्वपुटा– T।

**156.** दुःकुडश्च C। आदेश– T। अकालदेः शत्रादी V।

**157.** वर्चेः C। वधूटी all MSS.

**158.** इत्य– –भवति om. B।

**159.** इत्यस्मादेटः प्र– B।

**160.** कुशकशा– T। नृत्यं B। भाजनशेषः V। त्रुवि° V।

**161.** कपोटबको– B V। –ओटककर्कोटकादयः T। बकोटः T। फलटुः V।

**162.** –काश्गुरि– C। -डः C T -ड V। एभ्यटः T। वंतः। अनविट्टः T। काटं T V। काष्टा T V। ओष्टः T।

**163.** विष्टा T V। पृष्टः T V। अङ्कुशः om. T।

**164.** कुट्टं T। कोटः T।

**165.** च om. C।

**166.** पट्टे– C T। विट्टिपिष्टादयः V। पष्टा– T। पटः T V।

**167.** मृ–V। –ष्टपि–पोऽडः V। कंठप्रा– T। शलं for आयुधं V। –क्षीडः T। Perhaps विला ; see S. 209।

**168.** प्रशसनकारः B। शण्डः om. T शंडः V। पौरुषगुप्त– B। ना for पुरुषः V। अर्थं अश्वावि– V. अर्थं om. T। उत्सृष्टपशुः V। मनः for अन्तःकरणं V।

**169.** –ष्वलिभ्यो V। पलसंघातः T। पर्वश्च V। आंडः अंडश्च मुष्कः योनिविशेषेप्यंडः V। –विकारः खंडं B –विकारेप्यखंडं V।

**170.** –मुणि– om. C। –वापितः V।

**171.** तरुः om. T। त्रुवि° for वृक्षजातिः V। अव– –गालं च om. B। उन्मत्तः B।

**172.** –कुरुड– V। पक्षी for शकुनिः V। प्रत्ययाऽकारस्य B। कुरुडः V। कर च T। –त्ययाकारश्चौकारः B।

**173.** –सधष्ट–C। समुद्रः B। ईषीका V।

**174.** विकलांगवायुवा V।

**175.** वाडिस्त च C बनेस्त T V।

**176.** –ण्डेरण्डखराण्डादयः C–खरंगादयः V।

**177.** –ट्टृट्टृट्टृभ्य B।

**178.** कुशरु– C T। कुशरू T V। कुशुंडः T।

**179.** –खणिभ्यां C।

**180.** –काशदीर्घः T। धूर्तः stands at the end of the commentary in T।

**181.** नञः पू– B। आषाढा T अषढा V। भं for नक्षत्रं V।

**182.** उण्णो विरोम शोष्ट V। वेणा कृष्णवेणा V। ब्रह्मणादिः B। स्तुतिप्र– B। अर्णोः चंद्रः द्रुः V। पक्षी च V। दर्णो V।

**183.** वेह्नोशु– V। –तृवि–om. T। प्रजमने B प्रजनादिषु T। तृषा for पिपासा V। विष्णुमृ– B।

**184.** –ह्री T। गौरा– = Ś. II, 4. P. IV, 1, 41।

**185.** तंत्रधा–B। लोष्टप्र– B। –शेषौ च T। दुश्चुरुकुः B।

**186.** –तेर्गुणातेर्वा गमेर्वा B। Before कृणी V has only भूणा वृषुधिः I do not venture to correct। भ्रूणः V। क्षौन्तः om. B, in T it stands in the margin.।

**187.** –वृस्तुरु– C। –त्रुवि– C–क्रुवि– V। द्रुः for वृक्षः V। करभो ऽभिर्वागुई [ द्रु ]ः भृंग पक्षी V। व्याकरणागमादौ V। –चक्रं रेखांतिलका– T। अंगणः B। कंकणः B।

**188.** आश्चर्ये या– V। समुद्रो ऽब्धिवि° श्च V।

**189.** दृविव–T। –रिषोषा– T, but च —seems to have been corrected to श्च। अंशिः and धी for बृहस्पतिः and बुद्धिः V।

**190.** विभ्र च T V। कुंकणः B। उर च T। स्वदतेर्वा T।

**191.** -तिथि- om. C | -गुहेशानद् C | धषण्णाः देवाः V |

**192.** पिबो V |

**193.** स्वोवसी-T | आदेः द्रेक्काणकोक्काण-V |

**194.** वाहिगः V | शिखी for मयूरः V | -देयं धनं || T |

**195.** कुंभरः B | कुरुश्च T |

**196.** -द्रू- om. C | सूर्यः V |

**197.** क्षेः T |

**199.** गोदा-V | मखः corrected to मेषः T मुखः V | गेष्णः following after राश्चि, and रङ्गोपजीवी have been cancelled; accordingly राश्चि has been corrected to राश्चिः in T |

**200.** शठः or शवः; see the special paper. | मूर्छा [ र्छा ? ] B मर्जः V | पथिश्च V |

**201.** शराभू- C | -मुद्गराभा-V | धूर्विपूर्वेभ्यः V | भू समाग्राम om. T | दध्यर्थं क्षीरितः क्रसेकः V | वक्त्रे- B | धान्यापुटश्च V | भाग = S. IV, 4. P. VII, 4, 42. | पत्रसंघातः T | प्रहनं V |

**202.** ना च for पुरुषश्च V |

**203.** जानकी for जनकात्मजा V | वर्णैः बंधश्च V | विज्ञपवि० V | तुस्ताः | जटाः T |

**204.** पुत्तपित्त-C V | -तोर्मित च T -र्मोर्मित च V | उतः T | शुकभा- T | वक्रजातिः T | तिकश्च T | अंसदेशश्च T अंत- B अश-V |

**205.** चेक्रीतः T चेक्रीयितः V | यडः संज्ञा V |

**207.** आदित्यकव- T अभि-- -अमती मृत्युः om. B | स्वप्ने V | खल्वाटः for शीर्णकेशशिराः V | कुसूलः V | सूर्यः for आदित्यः V | पालः corrected to पालकः T | T adds शब्दे after प्रह्वत्वे | T adds in the margin गौत्रकृत् after कृकुतः |

**208.** हरिणः for मृगः T | सिकिः गत्यर्थः V | सिकताः | वालुकाः T | कांत. V | शाकविहितो नि- T शाखितो V |

**209.** -स्यलिविलिवि- B | कृत् विक्षेपे om. T | -धजीवसंघश्च V | बिलत् | बिलातः | म्लेछः B | शबा- B T | मदादान- V |

**210.** पलितं T |

**211.** कारिवि- B |

**212.** कुलच् T | कुशिताः T | कुशितं T |

**215.** कुलूताः देशाः V |

**217.** कवेरोत: T V | प C T |

**218.** अस्फोता B

**219.** कुषुवि- B | नमश्च for आकाशं च V |

**220.** रुहिवहि- C | वृक्षः om. T | ओषधी B | V adds एवं before मन्दतात् | मेदेती B | जीवतात् om. B V |

**221.** सूर्यः for आदित्यः V | इंद्रपुत्रादी च V | वदनपितृ- B, V has कीसंज्ञा instead | वदन्तः om. T | पुष्प्ऽ V | मेघः for जलदः V | राजा हिरण्यं सुखं च om. B | अनुक्ता भा- V | -कर्तव्याः B |

**222.** -दुष्कृता- V | सेः सीमन्त् V | हेम T |

**225.** -ाभ्यः स्थः V | नगरादी for प्राब--र्‍ं च V | मृड् B T V | मुता V | -मुखं T | -गादार्थः B |

**226.** -श्रीष वा C | अवगाथश्च B | अक्षसंघः V | रथः [?] V | सीमऽ V | सामर्पं-B साम | र्पं- T |

**227.** -तृमुदिवचि- T -तृषनुवचि- V | सुनार्थो V | मतिमान् V | रथऽन- V | गुरुश्च for आचार्यश्च V | गोड्पूर्वात् B | गें शब्दे om. T | प्रातःसवनं V | -सूर्छः V | सोमगानं B |

**228.** रात्रिप्र- V | उशीथः V |

**229.** निपू- B | -देणेश्च B | -नं तत्र स्नानं च V यज्ञ- om. T |

**230.** संघः for समूहः V |

**231.** यूथं संघः V | यूथ अमेध्यं च वि- V | तिश्च om. B | प्राट् कालश्च V | आदेः निरूथः V | निरूथा T | एते गीथ- V |

**232.** शमिशवि-B | केकयी-B केकैयी V | मदैषमत्स्यः V | मत्स्यश्च T | समाधिः corrected to समाधिः B समाधिः V | पंथश्च for पथिकश्च V | प्राहर्षः V | अत्रा पिकः काकऽर्‍- V कालः र्द- B | अर्थ om. B | कूर्मं | B |

**234.** असत्रः V | दुहेः शत्रुः V |

**235.** पक्षी for शकुनिः V |

**236.** सेवत्सरमा- B | कर्म्म for वर्म B |

**237.** कंदर्पः T कर्दपः V for कर्दमः | तरुणं तूणं मदुः बधं V | मृदु B | कर्णाभा- V |

**238.** इति om. B | इत्ययमादेश्च T | भवति om. T |

**240.** वृतुकुसु- V | संघः for समूहः V | उदरं for जठरं V |

**241.** -देतो V |

**242.** -विभ्या-B C T V | द्रुजातिः V | अर्थ B T om. V | स एव॰ for संख्याविशेषः B | B adds एवमन्येपि |

**243.** ककुदः T |

**244.** वुंदेः T | नेत्रव्याधिः V |

**246.** –कुलिकुणि– C । –मणि– om. B । भोजन–T । –गोपकर्ट B –गोपकर्ट V । –यशव: B –वशव: T अश्वठपश्चव: V ।

**247.** कुपेर्वेषू V । कुविन्द: om. B । कुविंदश्च V ।

**248.** –गाथाकी B गाथाको V । पुरुषश्च om. B । रक्षमेति अन्ये V ।

**250.** मुचेर्देकुंदुकुकुदी C मचे दुकुंदकुंकुंदीV, in the commentary repeated without mistakes. । स्तः for भवतः V । कुवि° च V ।

**251.** स्कंदामि– B । च C । स्कंध: अंसः ककुदं V । कुकुदं T । चक्षुहीन: V ।

**252.** –दंधक् प्र– T । निषिध: V । निषिधा देशः V ।

**253.** देश: for जनपद: V ।

**254.** कुजाति: V ।

**255.** पराच्छ्रो B C T । आयुधविशेष: T ।

**256.** यऽज्ञा B यच्छा V ।

**257.** कबंध: B T । छिन्नशिरो V ।

**258.** व्याध्या– T ।–स्यर्यातसि–C । भ्रष्टा T । सत्रं स्थितं V । रोचितं V । अर्ज B । स्योन: B स्यानं V । सूर्यर- B ।

**259.** गांगलचर्म V ।

**260.** रसिर्वा C । -यो गिद्दा म–T ।

**261.** शीद– the text to the end of S. 266 om. V । T adds in the margin क्षय: after दीन: । दृष्टांत: B ।

**262.** वश्वं– B ।

*263. घातनस्थानं B घात: स्थानं V । पुत्री B । आघाट: T s. m. ।

**264.** रमेस्त C T । वज्रादि T ।

**265.** कुस– B

**266.** युसु– C । मडो C । ज़व्यं T । स्तुत्यं for सुखं B ।

**267.** शिरनं V । शेफ: T ।

**268.** –थ्योक्कादय: C चौक्कादय: V । गौतम B । बुद्बुद: V । बहिरेत्वोर्पात्य: स्य V । –मेध T V । क्षीन: T s. m. । क्षीण: V ।

**269.** देश: for जनपद: V । जीवक: for बीजक: V । –नु विरोचनेः विरोचन: T । बु: for वृक्ष: V । आदित्य: for सूर्य: T । अभक्षःविशेष: V ।

**272.** पापकर्म V ।

**273.** पक्षी for शकुनि: V । अंतरीक्षं V । रंजन V । रजनौ om. B । अंत: for अवसानं V ।

**274.** –चंजिभ्यो B । सूर्य: for आदित्य: V । –कालाश्च T । विषवर्ण B । T adds in the margin चार्ड् after अम्बरीष: ।

**275.** –गमहमा–B –गमदहमा– V । ग च T । दुर्गम: B दुर्गमं T । आदिशब्दात् T आदेः का– –दयोपि ॥ V ।

**276.** –राम: C । The second मन: om. T ।

**277.** –युजि– om. B । –युधि– C । युवान: स्तरण: V । विमर्शक: om. B T । युगादि– T ।

**278.** एवं च V । राजविशेषश्च V ।

**279.** काजि– B T V –र्डजि– C । मेषश्च T । चन्द्र: om. V । जयमान: B । तुरंगश्च T हयश्च V ।

**281.** भवति स च om. T । गम्भेस.न: for वर्धमान: B । ना च for पुरुषश्च V

**282.** शोकाठि– C । श्यैंड् गतौ om. T । अभिचार: B । अभाश्यर्म– V । नल B ।

**283.** पापं कुटिलं च T । तुड् अदने om. B तुड़ V । अंधकार: हिमं च B । तमश्च for अन्धकार: V ।

**284.** अरण्यं for गहनं T । अब्ज B । अस्य om. B । बीभा– =S. IV, 4. P. II, 4, 56. ।

**285.** महिन: om. T । महा– B ।

**286.** –हृम्सि– C ।

**287.** इति om. B ।

**288.** Regarding the substitution of वी see S. IV, 4. P. II, 4, 56 । श्वेत: सु– B । कफिडा– =S. II, 3.

**289.** श च C T V । –शाकारांतादेशोपि भ– B । कंदविशेष: B ।

**290.** –भेदकव–B V । कीट: B ।

**291.** फलो गंतिश्च C । भं for नक्षत्रं V ।

**292.** –भ्य: स्तन: C । पट् गतौ । पट गतौ T । पत्तनं । पट्टनं । नगरविशेष: T V । –रेत्र च यत्रन्यं V ।

**295.** शासान: C ।

**296.** –चमिचिसु–B । –तल्पऽपिश– V । प: om. T । आदित्य: om. B, V has सूर्य:instead । चंपा B । चंपः B । चंपा B T । परात्मा T । स्वर्ग: explained in the margin by सूर्य: T । कुजाति: V । अंतरिक्षं B । शाकं B । तर्पः उर्प: V । सिध्मा for कापनीयं V । दारु: V । चर्मकरो– V ।

**297.** –ह्च्यु– B । –च्युस्तुभ्यस्त्वादेक: च T । –मित्तकृत: T V । आतपनवि– V । सूर्य: for आदित्य: V । –भुवनमु– T ।

**298.** कूर्प: B । सूर्प: V । अहि: for भुजंगम: V ।

**299.** –बाधे– C –बाधि– V । व C T । वाष्प: V । अश्रु: V । कूपश्च om. B । देशवि॰

for जनपदविशेषः V । हिंसागत्योः om. B । प्रावरणं V ।

**300.** पांपादयः T । शीलते: B । शीतिवी B शितेवी V ।

**302.** वृक्षः B वृक्षविशेषः V. T V add कदंबः । वृः for वृक्षः V । नीरं for उदके V ।

**303.** उम्य—पूरणं om. T । उपः T ।

**304.** —यजिम्ब— C । शर्क्र for प्रहरणं V । व्रणमुखे V । शाकः प— T शाकपकर्ण्णे V ।

**305.** शकुनीनाम om. V । कुरितं V ।

**306.** संसेः शम्सेः स इ— C शंसेः श इ— T । —कारस्यैकारो B । वृक्षजातिः B ।

**307.** —वातादयः C । विषस्तौ— B । —ति-नां च स्थानं ॥ B । अद्रिः तृणं पक्षे अलं कवि-वि°श्च V ।

**308.** काञ्ची om. B ।

**311.** उड B डड V । अपादि—=Ś. II, 3. । उडुव· अवः V ।

**314.** धवणे B T V । मेढ्रः B V ।

**315.** —नयोः । कल्फः । गल अदने । गुल्फ-श्च B । पदोपरि— V ।

**316.** स्यतेरित्वं T । वृजटा V ।—जटाः T । श्यतेरित्वं शि—टा । श्यतेरोत्वं शो— V । श्वयथुः V । आदेः शिफा— V । इफा— B ।

**317.** बलि— T । वः C । बलि T । वः प्र— T । वृः for वृक्षः V ।

**318.** —वंतेयौ B ।

**319.** पल फल om. B । शुल्वं B T V । उल्वं B T V रूप्यं for रजतं V । शुल्वं B T V ।

**320.** तुंब अ— V । अलावु B । चकारांतं च T चकांत गं च V ।

**321.** —रम्वः C । जनपदश्च B देशवि— V । तृणं V ।

**322.** कदि V । वृजातिः V ।

**323.** —बिलादेः B । —वायुश्च V । आदिशब्दा— T आदितो V ।

**324.** किम्बे लुक् च C । किदंबः B T । हिडंब; विलंबश्च B

**325.** डीनिर्बंधि— C । —श्चविच— T । डिम्बः C । डिदंबः प्र— T । प्रापणे om. B । वृः for वृक्षविशेषः V । बिम्बः B । प्रत्यक्षंदकः B । प्रति-छंदः T । V adds कर्या before बिम्बी । बिंबि V । वल्लीजातिः T ।

**326.** कुटुंबः B कुटंबं V । उंदुंब B उदंबः V । —चूर्णः B ।

**327.** गृत्– V । दृजनिरसि— T । —ग्गो ग्यः V । गृत् निगरणे om. T । हिंसागत्योः om. B ।

**329.** —वबोरमः V । श्वापदजीवविं— V । अठरस्थो B कदरस्थजंतुः V । पल फल om. B । पर्गंतः T । —गेतः V । खरः for स एव V । वड आग्रहणे सौत्रः V । —भूमिभागः B । कफिडा— = Ś. II, 3.

**330.** पर्षद् शाला च V ।

**331.** रुषिवृषिरुशिभ्यः C । नाभेयश्च for भगवांश्चादितीर्थंकरः V । T adds in the margin हिंसार्थः after लुषिः । मत्तेभः V । वनं च om. B ।

**332.** पिष्टि— B शिष्टि— C । —सेर— C T । —टिइभो च B । इत्यादिः B T । सेरः टिइभश्चा— T ।

**334.** ककेः C । कश्चांतो भ— T ।

**335.** दुमो C दमेर्दुंडु् T दुडु् B दुण्ड C दुंड V । दुंडु इ— T ।

**337.** कुसुंभं T ।

**338.** —मुदुह— V । —यवभू— B । —धुमू— C । —भावो— V । पुंस्त्वं च V । उत्तमः क्रमा— B । शमैः T । क्षेमः V । भामी B । यांकु प्रापणे om. B ।

**339.** —हाभ्यां B —हकुभ्यां C । The roots are wanting in my MSS.

**340.** विलिभिलिलिभिसि— V । —सीधीविधू— C । —सृध्यास्याह— T । —रुचि— C । सिविभ्यांच— T । —दशिभ्यः C । बिल्मः T । अंतरिक्षं B । आस्तुः [ख़ुः] for मूषकः V ।

**341.** क्षुमः V ।

**342.** असती for अतसी V । —काशन— T । नभः पुरं च for आका— V ।

**343.** —आंतो वा भ— T । —नरभूः V । सर्वा-र्थश्च om. B ।

**344.** चकारश्चांतो वा T । इति om. B ।

**345.** —के च C T V । गकारश्चांता— T । यमलं for युगलम् V ।

**346.** —गुल्म— om. V । रोचयतेः क च T । कव च V । यसै भीष्म् B । —मीर्षे V । पुतः इत्यस्य V । इत्यस्मात् रोतश्च भवति T । —स्ते चुलश्च V । —समूहः B । सनानं च B । सोमः corrected to स्तोम· T ।

**347.** । अपादित्वा— B । कफिडा—=Ś. II, 3. । कलिमः सैव B ।

**348.** —ध्वे च C T V । (—देशो) वा om. T । अधमः उभौ हीनौ B ।

**349.** —पूरिपुवि– C । —नभूतलं— T —ना भूः V । विष्टिमं B । भक्ष— B T p. m. । भक्ष— B T p. m. । भक्ष— B भक्षविशेषश्च T । पीते for पौ B । पूज्यं V ।

**350.** कुंडुकः T कंडदुकः V । चांवश्च B । घतहीनं V ।

**351.** डढटिकुथिकुटिल्यलिकुटि– B । अलूमः B । कावः for काहः V । भीजनं B ।

**352.** T adds को before दश above the line । लिंदुभा– T । –अश्व T । कुंकुमः B । पद्मं T । पूः for नगरं V । आदिमहमादन्ये- पि T ।

**353.** अनेन for कु– –नावे B । –कृत् दृ- ष्टिः T ।

**354.** विपूर्वात् B । असौ om. B । सूर्यः for आदित्यः V । चौरः for तस्करः V । प्सांक्रू om. T । याचेलमम् om. B ।

**355.** दाडिंमः T दाडिमः V । दुमातिः V ।

**356.** डिमेः सौत्रात् कित् T ।

**357.** –कींपिसिहि– T । वें om. T । दिश्या- नुभावदर्शनं च om. T । दिनांतः V । सञ्यं B सञ्य V । क्षेत्रस्थगो– B । पल्पः T । कंटकु– V । पल फलं om. B । अंतर्गतं लोहादिः V । मा- त्स्यर्यं B । वंध्या T वध्या V ।

**359.** –र्द्ध च C –र्धे च T V । –यो धकार- श्वांतो भ– T ।

**360.** –गशि– T । ना for मनुष्यः V । पक्षी for शकुनिः V । पक्षि नि– B T ।

**361.** वेन वा = Ś. IV, 2. P. VI |4, 43| पुण्यः सत्कर्मः T । T adds in the margin विपर्श after कृन्तति ।

**362.** –ड़े C T V ।

**363.** स्तंबेर्डित् B ।

**364.** –विन्ध्य– om. B । इः कर्मांतः T । –मानविच– B । मद्यभिक्षाभोजन– V । धनी for धनवान् V । ध च T । अद्रिः for पर्वतः V । गोऽनो विषश्च T । सत च T । तथ्यं for अमृषा V । अदेः लघ्वः दुध्यद्यादयः ॥ V ।

**365.** –वालिमणित– C । गुंडु शब्दे om. T । –कृतिः न– T । कतकः V । शस्त्रवि॰ for आयुधवि– V ।

**366.** केक च C T V । केक् चादेशः B केक इ– T । कैकयः V ।

**367.** इत्यादि क्रियाः शब्दाः B.

**368.** –यः अदप इः ॥ B । किसलयः B ।

**369.** वेधौ C । देस– T । नभः for आ- काशं V । आननं for आसनं B । सयनं V ।

**371.** एतौ om. T । धिरत्वं क– V ।

**372.** विपत्रः T । T adds in the mar- gin कषाति सर्वरोगं before कषायः ।

**373.** भुदाक्षि– V । –राज्यः T । अभ्य- प– B । T adds in the margin दशते वायुव- शात् before दशाश्यः । वैतनेयः V । महयाय्यः B एहायाय्यः V । वैतनेयः V । –कुशालयः V । अहानि तृणानि च B । T adds in the mar- gin भः । पुज्यश्च after अश्वमेधः, which has been corrected to –मेधा ।

**374.** निपात्यंते B । इपदाक्यं इत्यविशेषः V । दीयते– B । –दींधीष च V ।

**375.** को– C । –देयः V ।

**377.** मुनेस्य– = Ś. IV, 3 P. VII, 2, 114. ।

**378.** –दिणीलीयः B ।

**379.** –यज्यर्ते– B । धान्यः B । अभिश्च क्षत्रियः V । णी om. B । वरनं for वनम् B ।

**380.** हर––नः om. B । स्वर्ण्यं for सुव– –ज्यम् V । पः B पश्च V for पकारः ।

**381.** दता गुणी चा– V ।

**382.** वरेण्यः om. B । परब्रह्म B परब्र- ह्मा V ।

**384.** स्वर्णं च V । मृदुः V । ओदनं B । वनं for धनम् V ।

**385.** वर्णक्रू भाषणे om. B ।

**386.** उत C T V । उत इ– T । इत्यादे- शो भवति om. B । T adds in the margin वाक्ति तत्त्वं before उतथ्यः ।

**387.** –नभि– om. C । –अवि– om. B । –मदिमन्दि– om. B । –गासि– C V । शिर्मीक्र भयें om. B । मेकः for मण्डूकः V । चक्रिडा– = Ś. II, 3 । वृद्धौ om. B । आवरणे om. B । वृषि॰ for वृक्षवि– V । उद्विरणे om. B । चर्मविशेषः T । प्राकारः केदारः V । मकार वावा- स्तुभूमिः । T । द्विजः भेकश्च for ब्राह्मणः मण्डूक- श्च V । शन्ती om. B । बंद्रः T । वादी for बंदी B । बंदं T । पद्रः B । देशः for जनपदः V । भयश्च for क्षत्रियश्च V । बालाधानं B । सतानि V । वाशि B V वासिच् T । वासः T । ना for पुरुषः V । शब्दसंघः V । खरः for रासभः V om. B । शाशुः B ।

**388.** कक्ष– C । –शब्नि– om. B । –तृपि- om. V । –शुदिर्मदिशुभ्यंभि– C –शुदिदंमिदंशि– V । –वशि– om. V । –शुभवींचिसिरंशतौ– C –शुभिधति– B । अजः om. T । विक्रान्तः om. V । –व्यहुका– = Ś. IV, 1. P. VII, 3, 53. । गतौ om. B । सादनै कोटरे च सौभः V । कंटकागुल्मश्च V । जलदुर्गश्च V । बंद्रः V । भीमादि– = Ś. V, 1. P. III, 4, 74. । शुक्रः for अवदातः V । मंदं for अज्ञोमम् V । –भ्रीती–

